विना समयदीक्षाद्यैर्मन्त्रैर्दीक्षापि निष्फला ।
तस्मात् समयपूजां ते वक्ष्यामि पारलौकिकीम् ॥
...    ...    ...    ...    ...
...    ...    ...    ...    ...
सूर्य्यग्रहणकालो वा चन्द्रग्रहणवासरः ।
भूकम्पसमयो देवि नवरात्रिदिनानि च ॥
कन्यासंक्रान्तिसमया देवानामपि दुर्ल्लभाः ।
एतेषु समयेष्वेवं यः शिवां पूजयेच्छिवे ॥
स साक्षाद्भैरवो ज्ञेयो वरदानक्षमः शिवः ॥

*Colophons of the different chapters* :—

5A, इति श्रीत्रिकूटारहस्ये सूर्य्यग्रहणपटलः समाप्तः; 8B, ०चन्द्रग्रहण-पटलः; 11A, ०भूकम्पपटलः समाप्तः ।

The second batch of nine leaves contains two chapters of which the colophons run :—

5A, इति श्रीरुद्रयामले तन्त्रे त्रिकूटारहस्ये दशमः पटलः ।

9A, इति श्रीत्रिकूटारहस्ये एकादशः पटलः ।

## 5883.

### 10601. रुद्रयामले भुवनेश्वरीरहस्यम् । *Bhuvaneśvarī-rahasyam from Rudrayāmalatantra.*

Substance, country-made paper. 11 × 6½ inches. Folia, 90. Lines, 14 on a page. Extent in ślokas, 3,000. Character, Nāgara. Appearance, old and discoloured. Complete.

This work, in 26 chapters, deals in detail with the worship and rituals of Bhuvaneśvarī.

*Beginning* :—

ॐ श्रीगणेशाय नमः । ॐ नमः श्रीमहात्रिपुरसुन्दर्य्यै ।
अथ श्रीभुवनेश्वरीरहस्यं लिख्यते ।
ॐ चिद्रूपं यदुपस्पृश्यं स्वरूपं रूपे रूप्यं योगिभिः सर्व्वसंस्थम् ।
श्रीयाच्छम्भोर्स्त्रैपुराख्यं महस्तद्ब्रह्मब्रह्मानन्दसच्चित्रचित्रम् ॥

ॐ श्रीशैलराजशिखरे नानाद्रुमलताकुले
...................समासीनमुमापतिं ॥
एकदा देवमीशानं शशिशेखरमीश्वरं ।
... ... ... ... ...
उत्थाय विनता भूत्वा पर्य्यपृच्छत पार्व्वती ॥

श्रीपार्व्वत्युवाच ।

... ... ... ... ...
महेश श्रोतुमिच्छामि भुवनेशीरहस्यकम् ॥

श्रीभैरव उवाच ।

... ... ... ... ...
एकाक्षरी या देवेशी भुवनेशी महेश्वरी ।
हृदि लेखेव जागर्त्ति प्राणशक्तिरियं परा ॥
हृल्लेखा कथ्यते तस्मात् मायानुचित्तवैभवात् ।
अनया रहिताः सर्व्वे निर्ज्जीवा मन्त्रराशयः ॥
अतस्तु सर्व्वमन्त्राणामियमुद्बोधिनी मता ।
प्रत्यग्व्यावच्छिता भूत्वा तामेकाक्षररूपिणीम् ॥
कथयामि महादेवीं भुवनेशीं महेश्वरि ।
मायाबीजं नाममध्ये नमो मन्त्रान्तके वदेत् ॥
एकाक्षरीयं विदि(वि)ता भुवने भुवनेश्वरी ।
अनया सदृशी विद्या नास्त्यस्या ज्ञानसाधने ॥

*Colophons of the different chapters* :—

2A, इति श्रीभुवनेश्वरीरहस्ये एकाक्षरीप्रकाशो नाम प्रथमः पटलः; 3A, °चतुर्दशप्रकथनं नाम द्वितीयः पटलः; 4B, °एकाक्षर्य्यादिषोडशाक्षरी-प्रकटनविधिर्नाम तृतीयः पटलः; 5A, °तत्त्वविद्याप्रकाशको नाम चतुर्थः पटलः; 7B, °पूजाविधिर्नाम पञ्चमः पटलः; 67B, °नित्यपूजाविधिर्नाम षष्ठः पटलः; 69B, °कवचकथनं नाम सप्तमः पटलः; 74A, °मन्त्रनामसहस्रपटलोऽष्टमः; 74B, °तत्त्वविद्यास्तोत्राख्यः पटलो नवमः; 75A, उत्कीलनादिकथनपटलो

दशमः; 75B, ईश्वरमन्त्रप्रकाशनपटल एकादशः; 76A, ०दीक्षाविधिपटलो द्वादशः; 77B, ०पुरश्चरणविधिपटलस्त्रयोदशः; 78B, ०होमविधिपटलश्चतुर्दशः; 79B, ०चक्रपूजाविधिपटलः पञ्चदशः; 80A, ०आचारविधिपटलः षोडशः; 81A, ०सूर्य्यग्रहणपूजाविधिपटलः सप्तदशः; 82A, ०चन्द्रग्रहणपूजाविधिपटलो-ष्टादशः; 82B, ०मुकम्मपूजाविधिपटल एकोनविंशः; 84A, ०नवरात्रिदिनार्चा-विधिपटलो विंशः; 84B, ०कन्यासंक्रान्तिपूजाविधिपटल एकविंशः; 85B, ०शक्तिपूजापटलो द्वाविंशः; 86A, ०नवकुमारीपूजाविधिपटलस्त्रयोविंशः; 87B, ०प्रयोगविधिपटलश्चतुर्विंशः; 88B, ०घटार्गलयन्त्रविधिपटलः पञ्चविंशः; 90A, ०दशम्यर्च्चनविधिपटलः षड्विंशः। इति श्रीरुद्रयामले तन्त्रे श्रीदेवीभैरवसंवादे श्रीभुवनेश्वरीरहस्ये संपूर्णं समाप्तम् ॥

## 5884.

### 10605. रुद्रयामले कालीपंचवाणम्। *Kālīpañcavāṇam from the Rudrayāmala.*

Substance, country-made paper. 6×4½ inches. Folia, 6. Lines, 7 on a page. Extent in ślokas, 45. Character, modern Nāgara. Appearance, fresh. Complete.

The work deals with the six black rites of the Tantra, described as so many arrows.

*Beginning* :—

श्रीगणेशाय नमः॥

पार्व्वती उवाच।

देवाधिदेव देवेश महारुद्र नमोस्तु ते।
इदानीं श्रोतुमिच्छामि कालीवाणस्य लक्षणम्॥

... ... ... ... ...

श्रीमहादेव उवाच।

अथ वक्ष्ये वाणविद्यां कालिकायाः सुदुर्लभं॥ २॥
यस्य विज्ञानमात्रेण कर्त्ता हर्त्ता सदाशिवः।
कामत्रयं वह्निसंस्थं रतिविन्दुसमन्वितम्॥ ४॥

कूर्चद्वयं तथा लज्जां युगलं तदनन्तरम् ।

दक्षिणे कालिके चेति मध्ये वाणानि योजयेत् ॥ ५ ॥

मन्त्रः क्लीं क्लीं क्लीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके अमुकवाणा क्लीं क्लीं हूं हूं ह्रीं ह्रीं स्वाहा etc. etc.

*Colophon* :—

इति श्रीरुद्रयामले तन्त्रे चिंतामणिप्रयोगे ईश्वरपार्व्वतीसंवादे कालीपंचवाणपंचकं साधनं समाप्तम् ।

*Post Colophon* :—

शुभमस्तु संवत् १९१६ मीती माघसु ८ बुधवार लिखितं ब्राह्मभवानीरामजोसि पोथि कालिपंचवाणको लिखि ॥

## 5885.

6083. **रुद्रयामले नवदुर्गापूजारहस्यम् ।** *Navadurgāpūjā-rahasyam from the Rudrayāmala.*

Substance, country-made paper. 7 × 4½ inches. Folia, 30. Lines, 9 on a page. Extent in ślokas, 300. Character, modern Kashmiri. Appearance, fresh. Complete in 11 chapters.

The work consists of 11 Paṭalas—the first two are introductory, and the remaining nine are devoted to the details of worship of the nine forms of Durgā.

*Beginning* :—

ॐ श्रीगुरवे शिवाय ॐ नमः ।

श्रीगणपतये नमः ।

ॐ देवदेवं महादेवमीशानं शूलधारिणम् ।

प्रसन्नवदनं दृष्ट्वा प्रणम्योत्थाय पार्व्वती ॥

कृताञ्जलिपुटा देवी विनयानतमस्तका ।

स्मितपूर्व्वं वचो दीनं जगाद परमेश्वरम् ॥

श्रीदेव्युवाच ।

भगवन् परमेशान शरणागतवत्सल ।
त्वत्प्रसादान्मया सर्व्वं श्रुतं डामरमुत्तमम् ॥
तन्त्राणां सारमाद्यं तं यामलादिषु विस्तरम् ।
इदानीं भगवन् श्रोतुमिच्छामि त्वन्निवेदितम् ॥
नवदुर्गार्च्चनं दिव्यं सर्व्वतन्त्रेषु गोपितम् ।
सर्व्वकामप्रदं काम्यं साधकानां शुभावहम् ॥

श्रीभैरवः ।

एतद् गुह्यतमं देवि न कस्य कथितं मया ।
पूजां समयदीक्षायाः कोटिपूजा-फलप्रदाम् ॥
गुह्याद् गुह्यतमं गोप्यं कृतं तद्रुद्रकालकम् ।
इदानीं तव भक्त्याहं कथयामि सुविस्तरम् ॥

... ... ... ... ...

... ... ... ... ...

सन्ति नानाविधैर्मन्त्रैरागमोक्तैः सबीजकैः ।
तन्त्राणि विविधान्यत्र संहितानि महेश्वरि ॥
ते मन्त्रा निष्फला जाताः कलौ वीर्य्यविवर्ज्जिताः ।
स्त्रीशुद्रैरक्षिताद् द्रव्याद् भूम्यन्तःशुद्धिकारणात् ॥
अन्तताम्मत्सराद् दम्भात् पैशुन्याद्रव्यलोलुपात् ।
न सिध्यन्ति वरारोहे सर्व्वे निष्फलतां गताः ॥
सर्व्वागमानां शास्त्रन्तु प्रतिष्ठासिद्धिमेव च ।
अनादरेण तद् दृष्टं गुरुभक्तिं विना तथा ॥
तन्मध्ये सारभूतं तु प्रत्यक्षफलदायकम् ।
रुद्रयामलतन्त्रञ्च चतुःषष्ठ्यात्मकं परम् ॥
नानाविधैः शुभैर्मन्त्रैर्युक्तं समयपूजनैः ।
विना समयदीक्षाद्यैः मन्त्रैर्दीक्षापि निष्फला ॥
समयो हि शिवे ब्रह्मा समयो विष्णुरेव हि ।
समयः शिव एव स्यात् समयो सत्यरेव च ॥

न सिध्यन्ति सदा देवि नित्यपूजाजपादयः ।
यथा होमादयो देवि विना समयपूजया ॥
काले संपूजयेद्विष्णुं काले संपूजयेच्छिवम् ।
समये पूजयेच्छक्तिं समयोऽभीष्टदेवता ॥
कालः सृजति भूतानि कालो रक्षति नित्यशः ।
कालः संहरते चान्ते कालो हि दुरतिक्रमः ॥
षष्टिकल्पसहस्राणि ये कुर्वन्ति महेश्वरीम् ।
समये क्षणमात्रेऽपि पूजया तत् फलं लभेत् ॥

श्रीदेवी ।

समयः कीदृशो देवः पूजा कीदृग्विधा प्रभो ।
एतद्विस्तरतो देव वक्तुमर्हसि शङ्कर ॥

श्रीभैरवः ।

अष्टोत्तरशतप्रख्याः समयाः सन्ति पार्व्वति ।
तेषु यः पूजयेद्देवीं इष्टदेवीञ्च साधकः ॥
तस्य देवि भवेद्दुर्गा यथाभीष्टफलप्रदा ।
समयार्च्चनमेतत्ते वक्ष्यामि शृणु पार्व्वति ॥
यस्य कस्य न वक्तव्यं श्रुत्वा गोप्यतमं कुरु ।
चैत्रे मासि सिते पक्षे दिनानि नव पार्व्वति ॥
नवदुर्गार्च्चनं कुर्य्यात् साधकोऽभीष्टसिद्धये ।
तथैवमासि देवेशि सितपक्षादिवासरे ॥
नवम्यन्तां चरेत् पूजां विधिं विधिवदीश्वरि ।
सर्व्वेषु समयेष्वेतौ समयौ देवदुर्ल्लभौ ॥
तत्र यः कुरुते पूजां पठेत् स्तोत्राण्यनेकशः ।
चरेद्धोमं यथाशक्त्या स साक्षाद्भैरवोपमः ॥

श्रीदेवी ।

भगवन् श्रोतुमिच्छामि नवदुर्गार्च्चनं परम् ।
सत्वरं ब्रूहि मे देव यद्यस्ति मयि ते दया ॥

श्रीभैरवः ।

शृणु देवि प्रवक्ष्यामि नवदुर्गार्चनं परम् ।
रुद्रयामलतन्त्रेऽस्मिन् भाषितं साधकप्रिये ॥
तद्वक्ष्यामि महादेवि पूजासारमनुत्तमम् ।
यन्न दृष्टं पशुज्ञानैः कुपथभ्रान्तवृत्तिभिः ॥
यन्न शाक्तैर्न योगैर्वा न च वै पाशुपतकैः ।
स्वभाववादिभिर्नापि न च कर्म्मप्रवादिभिः ॥
नापि संशयवादैश्च नग्नार्हत्क्षपणादिभिः ।
न भूतवादिभिश्चैव नापि वा लौकिकैस्तथा ॥
न चात्मचिन्तकैर्वापि नापि तर्कप्रवादिभिः ।
न च वैशेषिकैर्वापि षट्पदार्थपरायणैः ॥
वेदान्तवादिभिर्वापि न चाप्येकत्ववादिभिः ।
इदं पूजादिकं सारं दुर्गाया नवरात्रिकम् ॥
अज्ञानतिमिरान्धानामुन्मीलनमनुत्तमम् ।
संसारपङ्कमग्नानां नौरिवोत्तारणं परम् ॥
...  ...  ...  ...  ...
...  ...  ...  ...  ...

The nine forms of Durgā are indicated :—

6A, ॐ आदौ श्रीशैलपुत्रीति ततः स्याद्ब्रह्मचारिणी ।
चन्द्रघण्टा च कुष्माण्डी स्कन्दमाता च पञ्चमी ॥
कात्यायनी कालरात्रिर्महागौरी तथाष्टमी ।
देवदूती च नवमी नवदुर्गा इतीरिताः ॥

*End :—*

इति श्रीनवदुर्गायाः पूजापद्धतिमीश्वरि ।
गोपनीयं महादेवि गोपयेन्निजयोनिवत् ॥

*Colophons of the different chapters :—*

6A, इति श्रीदुर्गासमयपूजायां प्रथमः पटलः; 7B, इति श्रीदुर्गाकल्पे द्वितीयः पटलः; 17A, इति श्रीरुद्रयामले तन्त्रे समयपूजाकल्पे नवदुर्गापूजा-

संग्रहे शैलपुत्रीपूजाविधिर्नाम तृतीयः पटलः ; 18B, ०ब्रह्मचारिणीपूजाविधि-र्नाम चतुर्थः पटलः ; 20A, इति श्रीचन्द्रघण्टापूजाविधिर्नाम पञ्चमः पटलः ; 21B, इति कुष्माण्डीविधिः षष्ठः पटलः ; 23A, इति श्रीस्कन्दमातृपूजाविधिः सप्तमः पटलः ; 24A, इति श्रीकात्यायनीपूजाविधिरष्टमः पटलः ; 25B, इति श्रीकाल-रात्रिपूजाविधिर्नवमः पटलः ; 27A, इति श्रीमहागौरीपूजाविधिर्नाम दशमः पटलः ; (last colophon) इति श्रीरुद्रयामले तन्त्रे नवदुर्गापूजारहस्ये देव-दूतीपूजाविधिर्नाम एकादशः पटलः ।

## 5886.

2364. **रुद्रयामले रामनामलिखनविधिः ।** *Rāmanāma-likhanavidhiḥ from the Rudrayāmala.*

Substance, foolscap paper. 10×3¾ inches. Folia, 4. Lines, 7 on a page. Extent in ślokas, 50. Character, Nāgara. Date, Saṃvat 1932. Appearance, fresh. Complete.

For a description of the present MS see L. X. 4217.

The essence of the book is summed up in the following lines :—

2A. राममन्त्रं लिखेन्नित्यमष्टगन्धेन भक्तितः ।
भूर्ज्जपत्रे ताडपत्रे प्रागपत्रे तथैव च ॥
नामसहस्रं नामशतं लिखेदनुदिनं सुधीः ।
मासमेकं शुद्धचेता यावल्लक्षं समाप्यते ॥
... ... ... ... ...
... ... ... ... ...
एवं मन्त्रं लिखेद्यस्तु लक्षसंख्यो जितेन्द्रियः ।
तस्य सिद्धो भवेन्मन्त्रः सर्व्वकामफलप्रदः ॥
शुद्धोदकेन संलिख्य कल्पनं घृतदीपकम् ।
पत्रं प्रागमयं प्रोक्तं लेखनी काम्रजा प्रिये ॥

3B, मुक्तिकामो लिखेन्नच्चं साधको विधिपूर्व्वकम् ।
सकामो वाञ्छितं लब्ध्वा भुक्त्वा भोगान् मनोरमान् ॥
जातिस्मरश्चिरं भूत्वा याति विष्णोः परं पदम् ॥

*Colophon* :—

इति श्रीरुद्रयामले रामनामलिखनविधिप्रकाशपटलं समाप्तम् ।
श्रीजगदम्बार्पणमस्तु ॥

*Post Colophon* :—

संवत् १९३२ ।

## 5887.

### 5014. रुद्रयामले अयोध्यामाहात्म्यम् । *Ayodhyā-māhātmyam from the Rudrayāmala.*

Substance, country-made paper. 10 × 5¾ inches. Folia, 69. Lines, 7 on a page. Extent in ślokas, 500. Character, Nāgara. Date, Saṃvat 1910. Appearance, discoloured. Complete.

The work contains 10 chapters. It refers to and describes the greatness of Ayodhyā proper and various other Tīrthas included within it.

*Beginning* :—

श्रीरामचन्द्राय नमः ।

वन्देऽहं रामचन्द्रस्य पादौ प्रणतरक्षकौ ।
सीतायाश्च पुनः पादौ सर्व्वसिद्धिविधायकौ ॥ १ ॥

... ... ... ... ...
... ... ... ... ...

श्रीपार्व्वत्युवाच ।

त्व[त्]तः श्रुत्वा महाभाग नानातीर्थकथाः शुभाः ।
साम्प्रतं श्रोतुमिच्छामि सरहस्यं सनातनम् ॥ ४ ॥

अयोध्याया महापुर्य्या महिमानं गुणोज्ज्वलम् ।
कीदृशी सा सदामेध्यायोध्या विष्णुप्रिया पुरी ॥ ५ ॥
आद्या सङ्गीयते वेदैः पुरीणां मुक्तिदायिका ।
संस्थानं कीदृशं तस्याः तस्यां के च महीभुजः ॥ ६ ॥
कानि तीर्थानि पुण्यानि माहात्म्यं तेषु कीदृशम् ।
अयोध्यासेवनान्नृणां फलं स्यादद कीदृशम् ॥ ७ ॥

*End* :—

मतिविपुलनिदानैर्वर्णितं धर्म्ममाद्यं
कलयति पर(म)भक्त्या क्षेत्रमाहात्म्यमेतत् ।
य इह नर उदारः श्रीसनाथः स सम्यक्
व्रजति हरिनिवासं सर्व्वभोगांश्च भुक्त्वा ॥ २४ ॥

*Colophon* :—

इति श्रीरुद्रयामले हरगौरीसम्वादे श्रीमदयोध्यामाहात्म्ये दशमोऽध्यायः ।

*Post Colophon* :—

शुभमस्तु सम्वत् १९१० मिति ज्येष्ठ शुक्ल ४ ।

## 5888.

### 5570. रुद्रयामले सूर्य्यपटलः । *Sūryapaṭalaḥ from the Rudrayāmala.*

Substance, country-made yellow paper. $10\frac{1}{4} \times 4\frac{1}{2}$ inches. Folia, 22. Lines, 9 on a page. Extent in ślokas, 400. Character, Nāgara. Appearance, fresh. Complete.

This relates to the worship of the Sun-god according to the Kaula form, the first chapter in it dealing with the *mantra* of the deity and the rules for its use, the second chapter, in prose, laying down the rules of worship (*paddhati*).

*Beginning* :—

श्रीगणेशाय नमः ... ... ... ...

श्रीभैरव उवाच ।

श्रीशैलशिखरासीनभैरवीपतिमीश्वरम् ।

भैरवं चन्द्रमुकुटं गणगन्धर्व्वसेवितम् ॥

पन्नगाभरणोपेतं जटामुकुटमण्डितं ।

... ... ... ... ...

... ... ... ... ...

... ... ... दृष्ट्वा प्रोवाच भैरवी ॥

श्रीदेव्युवाच ।

... ... ... ... ...

... ... ... ... ...

पुरा पृष्टोऽसि भगवन् मया त्वं भक्तिपूर्व्वकम् ।

कथ्य तद्वद तत्त्वं मे यद्यहं तव वल्लभा ॥

... ... ... ... ...

... ... कौलिकानां हितेच्छया ॥

वद शीघ्रं तथेशान पश्चाङ्गं पूर्व्वसूचितम् ।

(श्री)देवदेवस्य सूर्य्यस्य सर्व्वतत्त्वतमोत्तमम् ॥

*End* :—

इत्येषा नित्यपूजायाः पद्धतिर्गद्यरूपिणी ।

तव स्नेहेन निर्णीता नाख्येयाकौलिकैः[:] प्रिये ॥

*Colophons* :—

7A, इति श्रीरुद्रयामले ईश्वरपार्व्वतीसंवादे देवीरहस्ये तन्त्रे श्रीसूर्य्यपटलाख्यानं नामैकत्रिंशः पटलः समाप्तम् ।

22A, इति श्रीरुद्रयामले देवीरहस्ये श्रीसूर्य्यपूजापद्धतिवर्णनं नाम द्वात्रिंशः पटलः समाप्तः ।

## 5889.

### 2154. रुद्रयामलोक्तनवग्रहसिद्धयन्त्रपूजाविस्तारः ।

*Navagrahasiddhayantrapūjāvistāraḥ from Rudrayāmala.*

Substance, country-made paper. 8¾ × 3¾ inches. Folia, 2. Lines, 12–14 on a page. Extent in ślokas, 40. Character, Nāgara. Appearance, discoloured. Complete.

It gives directions for drawing and worshipping the *Yantra* or symbolic diagram, an illustration of which is given on Fol. 2A.

*Beginning* :—

कदाचिद्वनवासीनां पाण्डवानां सुप्रेक्षणे ।
आगतः कृष्णनाथस्य दृष्ट्वा पूजाकृतं विधिम् ।
संतुष्टः कृष्णनाथं च पप्रच्छ पाण्डुनन्दनः ।

युधिष्ठिरोवाच ।

देवदेव जगन्नाथ उपायं ब्रूहि तत्त्वतः ।
येन संप्राप्नुमाज्जेया साम्राज्यं सौख्यदं सदा ।

*Colophon* :—

इति श्रीरुद्रयामलोक्त-नवग्रहसिद्धयन्त्रपूजाविस्तारः समाप्तः ।

For a *Navagrahamantroddhāra* from the *Mahābhārata* cf. 5838 above.

## 5890.

### 2147. रुद्रयामले मङ्गलविधिः । *Maṅgalavidhiḥ from the Rudrayāmala.*

Substance, country-made paper. 7 × 4¼ inches. Folia, 10. Lines, 9 on a page. Extent in ślokas, 100. Character, Nāgara. Appearance, fresh. Complete.

The work deals with Tāntrika worship of the planet Mars.

*Beginning* :—

अथ मङ्गलव्रतविधानमन्त्रमभिधीयते। ब्राह्मे मुहूर्त्ते उत्थाय प्रातःकृत्यं कृत्वा शौचादिकं विधाय अरुणोदये अपामार्गकाष्ठेन दन्तधावनं कृत्वा नद्यादौ गत्वा ... ... रक्तवस्त्रोत्तरीयं धृत्वा ... ...रक्तचन्दनरक्तपुष्पैः ताम्रपात्रस्थिततोयेन अङ्गारकगायत्रीपठना-न्तोत्तरश्लतं भौमाय अर्घं दत्त्वा गृहमागत्य वितस्तिमात्रं रक्तगो-र्गोमयमूत्राभ्यां विलिप्य तदुपरि रक्तचन्दनेन मण्डलं विधाय तत्र गोधूमान्नं संस्थाप्य उपरि ताम्रकलशं वा मृन्मयं वा संस्थाप्य जलेनापूर्य्य ... ... तदुपरि भौमयन्त्रं त्रिकोणमेकविंशति त्रिकोणांकितमेकविंशति भौमनामसहितं संस्थाप्य तत्सम्मुखे स्वयं रक्तासने उपविष्टः ... ... ... ... मङ्गलव्रतमहं करिष्ये।

*End* :—

एषांगारकगायत्री जप्ताभीष्ट-प्रदायिनी।
माङ्गेयोप[ा]सनं प्रोक्तं देवदेवेन सिद्धिदं॥

*Colophon* :—

इति रुद्रयामले मङ्गलविधिः समाप्तः।

## 5891.

### 10040. कृष्णयामले त्रिभङ्गचरित्रम्। *Tribhaṅgacaritram from the Kṛṣṇayāmala.*

Substance, country-made paper. 11 × 4½ inches. Folia, 4. Lines, 9 on a page. Extent in ślokas, 112. Character, modern Nāgara. Date, Saṃvat 1952. Appearance, fresh. Complete.

A *Kṛṣṇayāmala* is noticed in Bik. 1284 and HPR I. 78. MSS of *Śeṣadevaśatanāmastotra* and *Caitanyakalpa,* said to be taken from the Kṛṣṇayāmala, are found in the old collection of the Asiatic Society of Bengal.

The work deals with the Tribhaṅga (three-bended) form of Kṛṣṇa.

*Beginning* :—

याहि स्थावरतां भद्रे न त्वां त्यक्ष्यामि मा रुद ।
ततो दिव्ये मणिमये स्थाने देवी सरस्वती ॥
आविरासानन्तफणाकारा सा धृतपञ्चिंणी ।
सर्व्वरत्नमयी वृन्दावने मत्परिपालिते ।
व्रजराजस्य महिषी राजयन्ती दिशश्चिवसा ॥

2B. वंशीमाहात्म्यमेतस्मै पठिष्यन्ति द्विजातयः ।
श्रोष्यन्ति च भविष्यन्ति द्रुतं द्रुतकवीश्वराः ॥
इदानीं श्रोतुमिच्छामि त्रिभङ्गत्वं कथं तव ।
तस्मै कथय गोविन्द विंद्याद्यानन्दसन्ततं ॥

... ... ... ...

कृष्ण उवाच ।

शृणु ते कथयिष्यामि बलराम कथां मम ।
त्रिभङ्गत्वं कामिनीनां मनोनयनरञ्जनम् ॥
महानन्दाभिधां वंशीं कराभ्यां परिगृह्य वै ।
प्रहसद्वदनो लीलारसचञ्चलमानसः ॥
जगाम पावकै-नीपमूलमानन्दविग्रहः ।
यस्मिन् दिव्ये तरोर्मूले मणिबद्धे महाप्रभे ॥

... ... ... ...

... ... ... ...

3A. ततो मे मुग्धचित्तस्य बभूव सरसं मनः ।
ततः शृङ्गारनामायं रसः प्रादुर्बभूव ह ॥
श्यामवर्णः सुखमयः सर्व्वलोकैकमोहनः ।
रसादानन्द आनन्दादनुभावो बभूव ह ॥
आत्मना रन्तुमिच्छामि नारी भूत्वा पृथग्वपुः ।
इति सञ्चिन्त्यमानस्तु मनसात्र सतां गतं ॥
स्वयमेव द्विधा भूत्वा परमानन्दरूपिणी ।
रसस्वरूपिणी चाहं स्वयंरूपा विनिर्गता ॥

... ... ... ...

... ... ... ...

4A. पश्चन्तस्त्वां वरारोहां लज्जयाधोमुखा द्रुतम् ।
तद्विनपाशसंवद्धचित्तस्य चरणद्वयम् ॥
मणिनूपुरयुग्मेन छलत्क्वणवद्वद् बभौ ।
ततो मम पदाम्भोजाद्रक्तकाद्या महौजसः ॥
तुष्टुवुः प्रेमवचसा प्रणयाविष्टचेतसा ।
हे नाथ चरणं लेकं चक्षुभ्यं दर्शय प्रभो ॥
तच्छ्रुत्वा वचनन्तेषां तुष्टये स्वयमेव हि ।
ध्वजवज्राङ्कुशाम्भोजलक्षणं दर्शितं पदम् ॥
तिर्य्यग्विमुदाराच्च ब्रह्मविद्याभिवार्चितं ।
अकार्षं राम सततं यतोऽहं भक्तवत्सलः ॥

... ... ... ...

एतान्येव कारणानि त्रिभङ्गत्वं गतस्य मे ।
नित्यं सत्यं चित्स्वरूपमानन्दरसविग्रहम् ॥
रूपमेतत् सदा ध्यायन् महाविद्यामुपचरेत् ।
ब्रह्मैवेदं हृदि ध्यात्वा सृष्टिञ्चासृजत् विभो ॥
शङ्करोपीदं चित्स्वरूपं ध्यात्वा सिद्धिमितो गतः ।
एतत्त्रिभङ्गरसविग्रहमादिभूतं
मूतेश्वविद्याविधिचित्रविचित्र + + ।
ध्यात्वा त्रिभङ्गचरितं पठितः शृणोति
यस्तस्य हृत्सरसिजे सततं वसामि ॥

*Colophon* :—

इति ते सर्व्वमाख्यातं त्रिभङ्गचरितं मम ।

*Post Colophon Statement* (in a later hand) :—

संवत् १९५२ कु० सु० १ बुधको श्रीछायामततन्त्र मे से लिखवयो श्रीराधामोहन गोस्वामी रावसाहेब काशी श्री ५० वालोंक श्रीराधाचरणजी की कृपासे ५।५।ई० व्यास गंगेश्वराम ।

## 5892.

### 6392. ब्रह्मयामलम् । *Brahmayāmalam.*

Substance, country-made paper. 9 × 3½ inches. Folia, 1–58 (bound in wrong order) of which Fol. 52 is missing. Lines, 10 on a page. Extent in ślokas, 1,000. Character, Nāgara. Appearance, old and soiled. Incomplete.

The topics dealt with herein relate to divination by means of various diagrams, illustrations of which are given. Some of the colophons give the title as Brahmayāmala while others simply write yāmala.

*Beginning :—*

मोहान्धकारमग्नानां जनानां ज्ञानरश्मिभिः ।
कृतमुद्धरणं येन तन्नौमि शिवभास्करम् ॥
अथातः संप्रवक्ष्यामि प्रोक्ता ये ब्रह्मयामले ।
मात्रादिभेदभिन्नानां स्वराणां षोडशोदयाः ॥
मातृकायां पुरा प्रोक्ताः स्वराः षोडशसंख्यया ।
तेषां द्वावन्तिमौ त्याज्यौ चत्वारश्च नपुंसकाः ॥
शेषा दशस्वर स्तेषु स्यादेकैको द्विके द्विके ।
ज्ञेया अतोऽस्वरा याक्ते स्वराः पञ्च स्वरोदये ॥
लाभालाभौ सुखं दुःखं जीवितं मरणं तथा ।
जयं पराजयं चैव सर्वं ज्ञेयं स्वरोदये ॥
स्वरादिमातृकोच्चारो मातृव्याप्तं जगत्त्रयम् ।
तस्मात् स्वरोदयं सर्वं त्रैलोक्यं सचराचरम् ॥

*Colophons of the different chapters :—*

2A, इति यामले मात्रास्वरचक्रम्; 2B, ०वर्णस्वरचक्रम्; 3A, इति जीवस्वरचक्रम्; 3B, इति राशिस्वरचक्रम्; इति भेदनस्वरचक्रम्; 4A, इति यामले द्वादशवर्षिकचक्रम्; 4B, ०ऋतुस्वरचक्रम्; 5A, ०पक्षस्वर-चक्रम्; इति तिथिस्वरचक्रम्; 7A, इति ब्रह्मयामले तिथिवारनक्षत्र-[चक्रम्]; 8A, इति यामले दिनास्वरचक्रम्; 8B, इति तात्कालिकस्वरचक्रे

प्रश्नभेदः; 9B, इति तात्कालिकस्वरचक्रे जातस्य शुभाशुभः; 10A, इति यामले स्वरप्रकारनिर्णयः; 11A, इति ब्रह्मयामले दिक्फलस्वरचक्रम्; 19A, ०महद्भ-सर्व्वतोभद्रचक्रम्; 20B, ०कंसग्रासचक्रम्; 22A, ०कुलचक्रम्; 23B, ०सिंहासन-चक्रम्; 29A, इति हृदयादियोगषट्कम्; 29B, उदरादियोगषट्कम् (the space for the illustration is left blank); 28B, इति मुखादियोग-षट्कम् (30A has the space for illustration left blank); 30B, इति गुदादियोगषट्कम्; 31A, इति ब्रह्मयामले वक्षाद्ययोगषट्कम् 31B, इति कपालादियोगषट्कम्; 32A, इति दंष्ट्राकराळकालानलचक्रम् (space for illustration left blank); 33A, इति ब्रह्मयामले राहुकालानल-चक्रम्; 33B, इति यामले सूर्य्यकालानलचक्रम्; 34A, इति चन्द्रकालानल-चक्रम्; 34B, इति यामले चन्द्रसप्तशलाकचक्रम्; 35A, इति सप्तशलाकानल-चक्रम्; 35B, इति यामले वक्रेन्दुचन्द्रचक्रम्; 36A, ०प्रथम मातृकास्वरचक्रम्; 36B, इति द्वितीयमातृकास्वरचक्रम्; इति तृतीयमा[तृ]कास्वरचक्रम्, 37A, इति यामले विजयचक्रम्; 38A, तोरणचक्रं समाप्तं; 38B, राशिसूर्य्यकालानल-चक्रम्; 39A, इति संघट्टकालानलचक्रम्; 39B, इति यामले गूढकालानल-चक्रम्; 40A, ०कुलाकुलचक्रम्; 40B, ०कुम्भचक्रम्; 42B, ०तुम्बुरचक्रम्; 43A, ०तुम्बरावर्त्तचक्रम्; 44B, ०अहि+लचक्रम्; 45A, ०लाङ्गलचक्रम्; 45A, [सर्पचक्रम्]; 45B, इति वृषचक्रम्; 47B, इति यामले नाडीगत-वृष्टिचक्रम्; 48A, ०सूर्य्यफणिचक्रम्; चन्द्रफणिचक्रम्; 49A, इति कविचक्रम्; 50A, इति यामले खलचक्रम्; 54B, ब्रह्मयामले कोट्टचक्रम्; 56A, इति यामले अश्वचक्रम्; 56B, इति रथचक्रम्; 57A, इति यामले कूर्म्मचक्रम्। The MS ends abruptly in the middle of the next topic.

## 5893.

### 10335. जयद्रथयामलम्। *Jayadrathayāmalam.*

Substance, country-made paper. 9 × 3½ inches. Folia, 103. Lines, 5 on a page. Extent in ślokas, 600. Character, Nāgara. Appearance, old and discoloured. Complete.

Jayadrathayāmala is said to be 24,000 ślokas in extent, divided into four ṣaṭkas or four parts of 6,000 ślokas each. The present MS contains the last ṣaṭka which principally deals with the worship of Vagalā, the eighth Mahāvidyā. For the first ṣaṭka cf. Nep., Vol. II. pp. 1–4, and for the last ṣaṭka, Nep., Vol. I. pp. 175–177.

*Beginning* :—

श्रीदेव्युवाच ।

देवाधिदेव भूतेश नित्यानन्दनिरञ्जन ।
निराकारगुणातीत सर्व्वेश प्रमिप्रेश्वर ॥ १ ॥
... ... ... ...
इदानीं श्रोतुमिच्छामि विद्याभेदं सुदुर्लभं ।
उत्पत्ति + + + देव तन्मे वद दयानिधे ॥

*Colophons of the different chapters* :—

5A, इति श्रीजयद्रथयामले उत्तरषट्के देव्योपनिषदि मद्देशकुलशासन आनन्दभैरवश्रोतसि(श्रोत्रे) श्रीमहाविद्याभेदकथनं नाम प्रथमः पटलः ।

22B, ०महाविद्या उत्पत्तिकथनं नाम द्वितीयः पटलः ; 27B, ०वगलादीपविधिर्नाम तृतीयः पटलः ; 36B, ०काम्यप्रयोगकथनं नाम चतुर्थः पटलः ; 58B, ०मन्त्रोद्धरणपूर्व्वकं श्रीवगलामुखीसाधनं नाम पटलः ।

97A, ०प्रातःकृत्यादि उद्वासनान्तश्रीवगलामुखीनित्यायाः गद्यमयी-पूजापद्धतिकथनं नाम पटलः ॥ ६ ॥

103B, ०वगलामुखीकवचकथनं नाम पटलः ॥ ७ ॥

## 5894.

### 1926. यामले कालपुरुषदानविधिः । *Kālapuruṣadānavidhiḥ from Yāmala.*

Substance, country-made paper. $8\frac{1}{2} \times 4\frac{1}{4}$ inches. Folia, 5. Lines, 9 on a page. Extent in ślokas, 70. Character, Nāgara. Appearance, old and faded. Complete.

The work contains both the *vidhi* (Foll. 1–3A) and *paddhati* (Foll. 3A–5) of the function.

*Beginning* :—

अथ कालपुरुषदानं लिख्यते ।
अतः परं प्रवक्ष्यामि दानानामुत्तमोत्तमम् ।
कालमृत्युहरं साक्षादपमृत्योश्च का कथा ॥
असाध्याख्यमहारोगमहाभयहरन्तमम् ।
प्रचुवर्गोदयकरं ग्रहदोषनिवर्हणम् ॥
तापत्रयहरं सद्यः सर्व्वोत्पातहरं शुभम् ॥
... ... ... ...
... ... ... ...
कालरूपमिति ख्यातं दानं दोषविनाशनम् ॥

The description of Kālapuruṣa, a human representation of Time clothed in black, is given as follows (Fol. 1B) :—

कालस्य पुरुषाकारं कृष्णवस्त्रेण कल्पयेत् ।
पादादिमस्तकान्तं च पञ्चारत्निप्रमाणतः ॥
वितस्तिद्वयमानेन शिरोभागं प्रकल्पयेत् ।
अर्द्धारत्न्या कण्ठदेशमधोभागे भुजद्वयम् ॥
तदर्द्धं हृदयस्थाने स्तनमण्डलमाचरेत् ।
अरत्निमात्रमुदरं मध्ये नाभिं प्रकल्पयेत् ॥
तदर्द्धं कटिदेशं च जघनं वृषणादिकम् ।
अधोवितस्तिद्वितये उरू जानू च गुल्फकम् ॥
पादद्वयं प्रकुर्व्वीत अङ्गुल्ययसमन्वितम् ।
कर्णाक्षिनासिदोर्घांश्च तत्तद्देशे प्रकल्पयेत् ॥
तिलैश्च पूरयेदत्र तत्तदंशे विचक्षणः ।
पद्मासने समानीतं शिल्पकैः परिशोभयेत् ॥
ततः सौवर्णरजतताम्रैर्मुक्ताफलादिकैः ।
भूषणैर्भूषितं चैव स्थाने स्थाने विशेषतः ॥
सुवर्णनूपुरौ कुर्य्याद्वलयौ राजतेन तु ।
कटिसूत्रं राजतेन कांस्यघण्टासमन्वितम् ॥

हस्तद्वयं राजतेन सुवर्णेनाङ्गुलीयकम् ।
कटकं राजतेनैव सुवर्णं बाहुभूषणम् ॥
ग्रैवेयं पदकं चैव स्वर्णेन राजतेन वा ।
मुक्ताहारं कण्ठदेशे मध्ये रत्नसमन्वितम् ।
कर्णद्वयं च ताम्रेण तथैव भूषणं च वै ।
अक्षिद्वयं राजतेन नासिकाग्रं सुवर्णतः ॥
मुक्ता सुदन्तपंक्तिं च ताम्रेणोष्ठद्वयं तथा ।
तिलकं राजतेनैव पट्टं स्वर्णविनिर्म्मितम् ॥
स्वर्णयज्ञोपवीतं च रत्नोष्णीषं च वेष्टयेत् ।
वामहस्ते कांस्यपात्रं खड्गं दक्षिणहस्तके ॥
मुक्ताप्रवालरत्नाद्यैः कर्णाभरणमाचरेत् ।

In leaf 3A the Vidhi ends and the Paddhati begins. The latter goes to the end of the MS.

*Last Colophon :—*

यामलोक्तकालपुरुषदानविधिः समाप्तः ।

The last colophon is followed by several verses about some Tāntrika rite.

## 5895.

**3179. महाशैवतन्त्रे आकाशभैरवकल्पम् ।** *Ākāśabhairava-kalpam from the Mahāśaivatantra.*

Substance, Serāmpore paper. 12¾ × 5¼ inches. Folia, 82. Lines, 9-12 on a page. Extent in ślokas, 2,000. Character, Bengali. Appearance, fresh. Complete.

Two Stotras from this work are mentioned in *Burnell* 198[b], 203[a]. MSS of an *Ākāśabhairavatantra* and a *Mahāśaivatantra* are also noticed there.

*Beginning :—*

श्रीगणेशाय नमः ॥ श्रीदक्षिणामूर्त्तये नमः ॥
गुरुं गणपतिं देवीं भैरवं शारभेश्वरम् ।
नमस्कृत्य प्रवक्ष्यामि धर्म्मशास्त्रं विभूतये ॥
साङ्गं सलक्षणं वेदसारभूतमभीष्टदम् ।
ज्ञानदं जीवजन्तूनां साधकानां सुखावहम् ॥

श्रीदेव्युवाच ।

श्रीशिवेशान्तदेवेश श्रीनाथ जगतां पते ।
श्रीगलागलचिद्रूप श्रीपते भवते नमः ॥
अन्यथा शरणं नास्ति शरणं त्वं महेश्वर ।
यद्गुह्यं परमं लोके यं शास्त्रमखिलप्रदम् ॥
यद्धितं साधकेन्द्राणां तद्वदस्व दयानिधे ।

श्रीश्वरोवाच ।

श्रीमत्परमसौभाग्यमन्त्रयन्त्रं गतात्मनां ।
त्रयाणामुपदेवानामतिगुह्यतमं परम् ॥
महामन्त्रक्रियाशास्त्रं महासिद्धिप्रदायकम् ।
सर्व्वदोषप्रशमनं पावकं लोकजीवनम् ॥
धर्म्मार्थकाममोक्षाणां फलदानप्रदं हितम् ।
सर्व्वज्ञानप्रदं ब्रह्मज्ञानदं सर्व्वसिद्धिदम् ॥
तादृशं कल्पमागोप्यं सर्व्ववेदाङ्गमात्मकम् ।
शीघ्रसिद्धिप्रदं श्रेष्ठं शृणु सर्व्वमयेम्बिके ॥
वक्ष्यमाणं महाशास्त्रं शृण्वतां पठतामपि ।
तथालोकय तां पुंसां (च)[व]नितानां विशेषतः ॥
क्षिप्रसिद्धिप्रदं दिव्यं कथयामि जगन्मयम् ।
2A, सहसा तस्य सौभाग्यं यस्तु ज्ञा + शुभूतिकम् ॥
तन्त्रमन्त्रः समुत्थाय प्रभाते देशिकं स्मरेत् ।
वक्ष्यमाणेन मन्त्रेण सान्ध्यं कर्म्म समाप्य सः ।
यथा तथा पुरायुक्तामेकान्ते भवने शुभे ॥

यथाविधि समाभूतोऽथाविंशेटचरे स्थितः ।
अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिता ॥

... ... ... ...

... ... ... ...

आराधनोपयोगानि संपाद्य तदनन्तरम् ।
ब्रह्मरन्ध्रे जगन्नाथं ब्रह्मानन्दमयं विभुम् ॥
परम्पराक्रमेणैव गन्धपुष्पाक्षतादिभिः ।
चिरं ध्यात्वा ततो देवि भूतशुद्धिं यथाविधि ॥
ऋषिन्यासादिकं कुर्य्यात् प्रसन्नात्मा यथाविधि ।
सर्व्वकार्य्यार्थसिद्धौ च सर्व्वविघ्ननिवृत्तये ॥
पञ्चाङ्गैरेकविंशेन यजेद्विनायकं पुरा ॥

*Colophons of the different chapters :—*

2B, इति श्रीमहाग्रीवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते उपासनाक्रमो नाम प्रथमोऽध्यायः; 3B, इति महाग्रीवतन्त्रे अतिरहस्ये पक्षिराजकल्पे उपासकगणपतियजनविधिर्नाम द्वितीयोऽध्यायः; 4B, इति श्रीमहाग्रीवतन्त्रे अतिरहस्ये उपासकभैरवयजनविधिर्नाम तृतीयोऽध्यायः; 6A, इति श्रीमहाग्रीवतन्त्रे अतिरहस्ये उपासकाभिषेकविधानं नाम चतुर्थोऽध्यायः; 7B, ०आकाशभैरवकल्पे मन्त्रयन्त्रं नाम पञ्चमोऽध्यायः; 8B, इति श्रीग्रीवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे चित्रमालाविधिर्नाम षष्ठोऽध्यायः; 9A, इति श्रीमहाग्रीवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे वश्याकर्षणप्रयोगो नाम सप्तमोऽध्यायः; 9B, ०रहस्ये मोहनद्रवकप्रयोगो नाम अष्टमोऽध्यायः; 10A, इति श्रीग्रीवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे स्तम्भन-विद्वेषणप्रयोगो नाम नवमोऽध्यायः; 10B, इति श्रीमहाग्रीवतन्त्रे अतिरहस्ये उच्चाटननिग्रहप्रयोगो नाम दशमोऽध्यायः; 11A, इति श्रीमहाग्रीवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे उमामहेश्वरसंवादे शङ्करेण विरचिते भोगमोक्षप्रकरणं नाम एकादशोऽध्यायः । इति प्रथमकल्पः समाप्तः ॥

12B, इति ॰सङ्कर्षणेन विरचिते आशुगरुडविद्या नाम द्वादशोऽध्यायः;
14A, इति श्रीमहाशैवतन्त्रे अतिरहस्ये आशुगरुडप्रयोगो नाम त्रयोदशो-
ऽध्यायः; 15B, इति श्रीमहाशैवतन्त्रे अतिरहस्ये आशुगरुडकवचविधिर्नाम
चतुर्दशोऽध्यायः; 16B, ॰आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे शिष्याचारविधि-
भेदो नाम पञ्चदशोऽध्यायः। द्वितीयः कल्पः समाप्तः॥

19A, इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवकल्पे शरभसालुव-
पक्षिराजकल्पे मन्त्रोद्धारविधिर्नाम षोडशोऽध्यायः; 22A, इति श्रीमहाशैवतन्त्रे
अतिरहस्ये आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे शरभसालुवपक्षिराजस्तोत्रं नाम
सप्तदशोऽध्यायः; 25A, इति श्रीशैवतन्त्रे अतिरहस्ये प्रयोगभेदो नाम अष्टा-
दशोऽध्यायः; 26A, इति श्रीपक्षिराजकल्पे निग्रहानुग्रहविवेको नाम एको[न]-
विंशोऽध्यायः; 27B, इति श्रीमहाशैवतन्त्रे होमविधिर्नाम विंशोऽध्यायः;
30A, इति श्रीमहाशैवतन्त्रे प्रत्यक्षसिद्धिप्रदे पक्षिराजकल्पे निग्रहविधिर्नाम
एकविंशोऽध्यायः; 33A, इति श्रीमहाशैवतन्त्रे अतिरहस्ये आकाशभैरवे कल्पे
रक्षाभिषेको नाम द्वाविंशोऽध्यायः; 36B, इति श्रीमहाशैवतन्त्रे पक्षिराजकल्पे
क्षुद्रविधिर्नाम त्रयोविंशोऽध्यायः; 40B, इति श्रीमहाशैवतन्त्रे अतिरहस्ये
आचारपुरश्चर्यासिद्धिर्नाम चतुर्विंशोऽध्यायः; 42B, इति श्रीमहाशैवतन्त्रे
शरभाराधनविधिर्नाम पञ्चविंशोऽध्यायः; 47A, इति श्रीशैवतन्त्रे अतिरहस्ये
शरभकल्पे मातृकाक्षरवलिविवेको नाम षड्विंशोऽध्यायः; 48B, इति श्रीभैरव-
शैवतन्त्रे कल्पे भद्रकालीविधिर्नाम सप्तविंशोऽध्यायः; 51B, इति श्रीमहाशैवतन्त्रे
आकाशभैरवकल्पे तैलाञ्जनविधिर्नाम अष्टाविंशोऽध्यायः; 52B, इति श्रीमहाशैव-
तन्त्रे कल्पे मालामन्त्रे शूलिनीदुर्गाध्यायत्रयं विना एकोनत्रिंशोऽध्यायः; 54A,
इति श्रीमहाशैवतन्त्रे आकाशभैरवकल्पे त्रिंशोऽध्यायः; 56B, इति श्रीशैवतन्त्रे
आकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे वलिकर्म्मविधानं नाम एकत्रिंशोऽध्यायः; 57B,
इत्याकाशभैरवकल्पे द्वात्रिंशोऽध्यायः; 59A, इत्याकाशभैरवकल्पे महाशैवतन्त्रे
प्रत्यक्षसिद्धिप्रदे वडवानलमन्त्रं नाम त्रयस्त्रिंशोऽध्यायः; 60B, इति श्रीमहाशैव-
तन्त्रे आकाशभैरवकल्पे दिक्पालमन्त्रं नाम चतुस्त्रिंशोऽध्यायः; 61B, इत्याकाश-
भैरवकल्पे व्याधिमन्त्रं नाम पञ्चत्रिंशोऽध्यायः; 62A, इत्याकाशभैरवकल्पे
स्तम्भप्रयोगं नाम षट्त्रिंशोऽध्यायः; 68B, इत्याकाशभैरवकल्पे शरभकवचं नाम

सप्तत्रिंशोऽध्यायः ; 70A, इत्याकाशभैरवकल्पे कामराजमन्त्रं नामाष्टत्रिंशोऽध्यायः ; 71B, इति श्रीआकाशभैरवकल्पे रत्नायामखडीमन्त्र नाम एकोनचत्वारिंशोऽध्यायः ; 72B, इत्याकाशभैरवकल्पे मोहिनीमन्त्रं नाम चत्वारिंशोऽध्यायः ; 73A, इत्याकाशभैरवकल्पे शब्दाकर्षण-भाषामन्त्रनामैकचत्वारिंशोऽध्यायः ; 74A, इत्याकाशभैरवकल्पे लक्ष्मीमन्त्रं नाम द्विचत्वारिंशोऽध्यायः; 74B, इत्याकाशभैरवकल्पे मायामन्त्रं नाम त्रिचत्वारिंशोऽध्यायः ; 75A, इत्याकाशभैरवकल्पे पुलिन्दिनीमन्त्रं नाम चतुश्चत्वारिंशोऽध्यायः ; 77B, इति श्रीमहाशैवतन्त्रे आकाशभैरवकल्पे महाशास्तामन्त्रं नाम पञ्चचत्वारिंशोऽध्यायः ; 78A, इत्याकाशभैरवकल्पे महाशैवतन्त्रे प्रत्यक्षसिद्धिप्रदे संक्षोभिणीमन्त्रं नाम षट्चत्वारिंशोऽध्यायः ; 79A, इत्याकाशभैरवकल्पे धूमावतीमन्त्रं नाम सप्तचत्वारिंशोऽध्यायः ; 80A, ०प्रत्यक्षसिद्धिप्रदे धूमावतीमन्त्रं नामाष्टाचत्वारिंशोऽध्यायः ; 80B, इत्याकाशभैरवकल्पे नद्युत्तारणप्रयोगो नाम एकोनपञ्चाशत्तमोऽध्यायः ; 82B, इत्याकाशभैरवकल्पे महाशैवतन्त्रे प्रत्यक्षसिद्धिप्रदे चित्रविद्यामन्त्रं नाम पञ्चाशत्तमोऽध्यायः ॥

## 5896.

### 4634. **उत्तरतन्त्रे स्वप्नाध्यायः ।** *Svapnādhyāyaḥ from Uttaratantra.*

Substance, country-made paper. 9¼ × 4¼ inches. Folia, 3. Lines, 8 on a page. Extent in ślokas, 30. Character, Bengali. Appearance, discoloured and worn-out. Complete.

The work relates to the interpretation of dreams.

IO. V. 3135 describes a *Svapnādhyāya* which, in its colophon, is stated to belong to the *Itihāsapurāṇa* by Bṛhaspati. For almost identical topics from the *Mārkaṇḍeya Purāṇa* and *Bhaviṣya Purāṇa* cf. ASB. V. 3733, 3754-5. A MS of an *Uttaratantra* in 16 chapters is described in HPR. I. 35.

*Beginning* :—

नमो गणेशाय ।

अथोत्तरतन्त्रोक्तः स्वप्नाध्यायः ।

श्रीदेव्युवाच ।

देवदेव महादेव भक्तवत्सल शङ्कर ।
प्रायः कलियुगादेव लोकाः कल्मषभाजनाः ॥
कथं ज्ञानं भवेत्तेषां शुभाशुभफलेष्विह(ः) ॥
भविष्ये वर्त्तमाने वा अतीते वा महेश्वर ।
विस्तरेण समाचक्ष्व यदि तेऽस्ति कृपा मयि ॥

ईश्वर उवाच ।

गुह्यं चैतत् प्रवक्ष्यामि तव प्रीत्या वरानने ।
साधकस्यास्तु देवेशि सर्व्वं प्रत्यक्षतां व्रजेत् ॥
दैशिकस्याथ वक्ष्यामि लक्षणं शृणु साम्प्रतम् ।
पुरश्चर्य्यापवर्गार्थं भक्तिश्रद्धान्वितस्य च ॥
जपपूजारतस्यापि कायक्लेशसहिष्णुस्य च ।
दातुर्भोक्तुः पालकस्य सर्व्वं प्रत्यक्षतां व्रजेत् ॥
स्वच्छन्दचरितस्याथ स्वच्छन्दहृदयस्य च ।
स्वप्ने दृष्टे तु देवेशि स्वप्नं प्रत्यक्षतामियात् ॥
संदेहे संशये गर्ते भये च समुपस्थिते ।
अरोगी शुद्धदेहः सन् भस्म स्नात्वा च भक्तितः ॥
नत्वा च देवतां देवि सुतल्पे शयनं चरेत् ।
यथा यथा प्रसुप्तस्य आर्त्तस्य च महेश्वरि ॥
प्रसादं कुरुते स्वप्ने किञ्चिद्दर्शनसंहतः ।
सद्यस्त्रिरात्रसप्ताहे द्विसप्ताहेऽथवा पुनः ॥
एकविंशतिरात्रेण स्यात एव धियां पतिः ।
प्रसादं कुरुते स्वप्ने ततः सिद्धेर्विदर्शनम् ॥
स्वप्ने पश्यति यो देवं महेशं सर्व्वतोमुखम् ।
देवीं वा स्वप्नमुख्यात्र प्रश्नं वाऽथ यथाविधं ॥

देवतादर्शनं चाथ निर्म्मलं चक्रमण्डलम् ।
गङ्गां भागीरथीं भानुं लिङ्गं विज्ञानमैश्वरम् ॥
प्रसन्नं तत्र जानीयात् सिद्धिं स्वप्नप्रदर्शने ॥
ख्यातिलाभो भोजनञ्च रोदनं रुधिरस्रुतम् ।
संग्रामविजयो होमो हर्म्म्याद्यारोहणं तथा ॥
नदीसमुद्रतरणं आकाशगमनं तथा ।
भास्वरोद्गमनं चैव ज्वलनं तु हुताशनम् ॥
हर्म्म्याद्यारोहणं चैव प्रासादशिखरेऽपि च ।
... ... ... ... ...

2B, लभेत् सिद्धियुतञ्चैव देवीनाञ्चैव दर्शनम् ॥

*End* :—

दुःस्वप्नं यदि देवेशि खरादिरोहणान्तथा ।
भक्तानामन्यथा भावो दुःस्वप्नमिति निश्चितं ॥

*Colophon* :—

इत्युत्तरतन्त्रोक्तः स्वप्नाध्यायः समाप्तः ॥

## 5897.

### 10528. मार्ज्जारीतन्त्रम् । *Mārjārītantram.*

Substance, country-made paper. 10 × 5 inches. Folium, 1. Lines, 9. Character, Nāgara. Appearance, discoloured. Incomplete. Fragmentary.

The name Mārjārītantra is indicated on the left hand upper margin. It contains only ten verses dealing with the worship of Ucchiṣṭagaṇeśa.

*Beginning* :—

गणेशाय नमः ॥

देव्युवाच ॥

देवदेव जगन्नाथ सर्व्वज्ञ परमेश्वर ।
भैरवानन्द चिन्मात्र नमः स्वच्छन्दवृत्तये ॥ १ ॥

ग्रौचेण सर्व्वसिद्धिः स्यात् केनोपायेन शङ्कर ।
वेदाचारविहीनानां सद्योच्छिष्टशरीरिणां ॥ २ ॥
शौचेण सिद्धिदं मन्त्रं ब्रूहि मे परमेश्वर ।

ईश्वर उवाच ॥

उच्छिष्टगणनाथाख्यं सर्व्वसिद्धिप्रदायकम् ॥ ३ ॥
सर्व्ववश्यकरं लोके स्त्रीणां पुंसामिदं शुभम् ।
वश्यं करोति राजानं स्त्रियं वा पुरुषं तथा ॥ ४ ॥

## 5898.

### 4745. कालोत्तरे मुद्रापटलम् । *Mudrāpaṭalam from the Kālottaratantram.*

Substance, palm-leaf. 12 × 2¼ inches. Folia, 8, of which five are marked 27, 43, 81, 98 and 110; the rest are without leaf-marks. Lines, 5 on a page. Extent in ślokas, 18. Character, Kuṭila. Appearance, old and dilapidated. Fragmentary.

All the folia except 27 are more or less damaged and they do not belong to the same work. The damaged and fragmentary condition of the MS does not make it possible to ascertain the works to which the folia belong. On fol. 110A, the *Gālavacarita* is mentioned twice. Leaf 27B contains the following colophon :—

इति कालोत्तरे मुद्रापटलम् ।

## 5899.

### 2889. योनितन्त्रम् । *Yonitantram.*

Substance, country-made yellow paper. 15 × 4 inches. Folia, 17. Lines, 5 on a page. Extent in ślokas, 250. Character, Bengali. Appearance, fresh. Complete in 8 chapters.

The work is described in L. IX, 3185.

## 5900.

### 4672. *Yonitantram.*

Substance, country-made paper. 14 × 5 inches. Folia, 8. Lines, 9 on a page. Extent in ślokas, 200. Character, Bengali. Appearance, old and discoloured. Complete in 8 chapters.

## 5901.

### 5093. *Yonitantram.*

Substance, country-made paper. 14½ × 4 inches. Folia, 9. Lines, 8 on a page. Extent in ślokas, 225. Character, Bengali. Appearance, old and discoloured. Complete in 8 chapters.

## 5902.

### 6088. *Yonitantram.*

Substance, country-made paper. 7½ × 4¾ inches. Folia, 25. Lines, 7 on a page. Extent in ślokas, 225. Character, modern Kashmiri. Appearance, fresh. Complete in 8 chapters.

The last verse of the previous MSS of the work is not found here.

## 5903.

### 10000. योनिगह्वरतन्त्रम् । *Yonigahvaratantram.*

Substance, palm-leaf. 12 × 2 inches. Folia, 40. The corners of the leaves which may have borne leaf-marks are worn away. Lines, 5 on a page. Extent in ślokas, 550. Character, old Newari. Appearance, old. Complete.

The work seems to belong to the Nātha school.

*Beginning* :—

या मान्तकामिकुहरोत्थितभास्वरायां
सोमार्कवह्निविपथोदरमध्यसंस्था ।
चिच्चेतश्चिन्तविघ्नं + + + भावां ।
स्वाभावभ[ा]सकिपरां प्रणमामि कालीं ॥
श्रीमदुत्तरपीठे तु श्मशाने करवीरके ।
सर्व्वयोगिनी मेला यो + + + मये ॥
योनिगह्वरमुद्धृत्य मन्त्रसद्भावमुत्तमम् ।
श्रीज्ञाननेत्रनाथेन भूतले संप्रकाशितम् ॥
ब्रह्मय + + + + + भैरवं विगतामयं ।
शक्तिस्थं शक्तिरहितं परमानन्दरूपिणम् ॥
निर्वाणं निर्व्विकारञ्च अप्रतर्क्यं मनो प +
+ + गुणगणैर्हीनं उदयास्तमवर्ज्जितम् ॥
भूचरी खेचरी चैव दिक्चरी गोचरी तथा ।
योगिनी शाकिनी नामा सिद्धसङ्घैः + + + + ॥

A list of the *gurus* of the school is given thus :—

17B, गुरुक्रमं प्रवक्ष्यामि शृणु वीरेन्द्रनायकम् ।

श्रीदेव्युवाच ॥

शृणु भैरव-राजि[श] कथयामि मह[ा]द्भुतम् ।
य[न्न] कस्यचिदाख्यातं सिद्धानां खेचरीषु च ॥
तव स्नेहात् प्रवक्ष्यामि सिद्धिचक्रचतुष्टयम् ।
अनाख्येया परा निष्ठा ख्याता मोक्षप्रदायिनीं ॥
प्रथमं क्रमपूर्व्वन्तु द्वितीयं सिद्धपूर्व्वकं ।
संहारं तु तृतीयं स्यात् अनाख्येयं चतुर्थकम् ॥
एतेषां क्रमराजानां सिद्धसंज्ञा वदामि ते ।
पश्चान्मन्त्र महाभीमं विद्या सङ्घर्षणी तथा ॥
आद्ये युगे यथा जातं त्रेतायां द्वापरे तथा ।
चतुर्थे महाघोरे समासा शृणु भैरव ॥

खगेन्द्रनाथशिष्या अच्चा आयातानि कृतो युगे ।
द्वितीये कूर्म्मनाथं तु मंगलादूतिमेव च ॥
तृतीये षष्ठनाथञ्च काममङ्गलया सह ।
चतुर्थे मीननाथं च कुङ्कणादूतिसंयुतम् ॥
तस्यैव क्रीडमानस्य उत्पन्ना द्वाद[श] सुताः ।
तेषां नामानि वक्ष्यामि आम्नायं च यथास्थिताः ॥
भट्टामरमहेन्द्रं च वल्कलं चित्रमेव च ।
विन्ध्यालिं वरदेवं च अहेन्द्रं च गजेन्द्रकम् ॥
महोधरं च गुडिकं सिद्धेयाः गुरुसन्तती ।
एभ्योर्द्धरेताः षट् चैव साधिकारटिकस्तथा ॥
तेषां च प्रविभागं तु कथयामि वृषध्वज(ः) ।
भट्टमहेन्द्रनाथं च वल्कलं च तथा परम् ॥
अहेन्द्रं च गजेन्द्रं च महोधरस्तथैव च ।
एते सिद्धा महादेव ऊर्द्धरेता गता[ः] सदा ॥
अमरानाथपादं तु वरदेवस्तथापरः ।
चित्रालिं विन्ध्यनाथञ्च गुडिकानाथमेव च ॥
एते षट् स्यात् विकारास्ते कथिता[ः] सुरपूजित(ः) ।
मिव्कुयानाथपादं च ज्ञानदीप्तिः सहैकतः ॥
विद्यानन्द च रत्नं तु द्वितीयं कथिता तव ।
सत्यानन्दं महानन्दं तृतीयं सिद्धपूजितम् ॥
शिवानन्दं च रत्ना च आयातं च चतुर्थके ।
खगेन्द्राद्यादिसिद्धानां कथिता गुरुसन्ततौ ॥
एते वै कुलमार्गे स्य रहस्यं शिवनिर्म्मितम् ।

The origin of the scriptures of the school and the order of creation of the world are indicated as follows :—

34B. सम्यक् महाश्रासनसम्प्रदायं पूजाकथासंक्रमपूर्व्वमेवं ।
सम्प्राप्य कौलोत्तरसारभूतं अभूतपूर्व्वं अथ चारणादिं ॥

देवी श्रीवीरसिंहाख्यस्वामिनी प्रसूता भुवि ।
तत्पादपद्मयुगलात् प्राप्तं चैव महानयम् ॥
श्रीरूपानन्दविधा देवी दत्तं तस्य प्रसादतः ।
तया दत्तं स्वशिष्यस्य श्रीपानन्दाभिधानतः ॥
दत्तं परामृतरसं महाग्रासनमुत्तमम् ।
तेनेदं चरितं सर्व्वं यथा प्राप्तं गुरोर्मुखात् ॥
सम्प्रदायं सुसंबद्धं सरहस्यं सुखागमम् ।
रचितं गुरुवाक्येन स्वसन्तानहिताय च ॥
आदौ सर्व्वमिदं शून्यं निराभासं निराश्रयम् ।
ततो आभाससमुत्पन्नं आभासध्वनिसम्भवम् ॥
ध्वनिस्तु शब्दमापन्नं शब्दो नादत्वमागतम् ।
नादविन्दुरिवोत्पन्नं विन्दुपद्मं प्रजायते ॥
ततः दृष्टा त्रिकोणन्तु ज्ञानरूपं सुतेजसम् ।
ततस्तत्पृष्ठके चक्रं त्रिकोणं तापरूपिणम् ॥
ज्ञानतापक्रमेणैव अवतीर्णं महानयं ।
ततो मध्या परा योनि रकाराद्यतमुत्तमा ॥
तत्र मध्या विस्फुलिङ्गं उत्पन्नं भूरितेजसम् ।
विस्फुलिङ्गात् समुत्पन्ना रावं सम्पूर्णलक्षणम् ॥
ततो रावात् समुत्पन्ना देवी ह्रीङ्कीणापूर्णगा ।

*End* :—

जयति त्रिभवनाख्यं रौद्रचण्डप्रमूर्त्तिमम् ।
अमल-कमल-सार्न्नं सर्व्वदेहप्रसिद्धं
कुमतिमिह देवी साधकः सिद्धिदा तु ॥

The last colophon which is the only colophon in the whole work runs :—

इत्युत्तराम्नाये श्रीॐकारपीठविनिर्गते श्रीचण्डभैरवे षोडशसहस्रे उड्डिते योनिगह्वरं समाप्तं । इति शुभं ।

## 5904.

### 3160. कुलार्णवतन्त्रम् । *Kulārṇavatantram.*

**Substance**, country-made paper. 14 × 5¼ inches. **Folia**, **66**. **Lines**, 11 on a page. Extent in ślokas, 2,150. Character, Bengali. **Appearance**, fresh. Incomplete.

The work, in 17 chapters, has been published in the *Tantrasaṅgraha*, *Sulabha Tantra-Prakāśa* and *Tantric Texts* of Arthur Avalon (Calcutta, 1917). The present MS goes to the end of the 14th ullāsa. Of the 15th ullāsa there is only one leaf.

## 5905.

### 3452. *Kulārṇavatantram.*

**Substance**, country-made paper. 17½ × 4 inches. Folia, 1–69 (as indicated on the right hand side) and 76–144 (as indicated on the left hand side). Lines, 7 on a page. Extent in ślokas, 2,300. Character, Bengali. Date, Śaka 1640. Appearance, discoloured. Complete in 17 chapters.

*Post Colophon* :—

ऋतुरन्ध्रा + + ख्यासु शकेषु छायाप्रम्भेगा ।
रहस्योयं मुद्रालेखि शिवोक्तः शिवया सह ॥

रुद्रयामले ।

उड्डीयाने महापीठे न सिद्धिः स्यात् स्त्रियं विना ।
स्त्रीविहीनो साधने च विघ्नं कुर्व्वन्ति देवताः ॥
तथैव देविदेकोठे पीठे देवि सुनिश्चितम् ।
भक्ताहारविहारा च सर्व्वलोक-मनोहरा ॥
यस्या दर्शनमात्रेण मनःक्षोभः प्रजायते ।
अक्षोभो मनसश्चैव तत्र सिद्धिः प्रजायते ॥
सुजातीया सर्व्वदा ग्राह्या ब्राह्मणीं यवनीं विना ।
रजकी नापिती ग्राह्या विदग्धा सर्व्वदैव च ॥

ब्राह्मणीं यवनीं वापि यः स्पृशेद्दैवयोगतः ।
न तस्य विद्यते सिद्धिः कल्पकोटिशतैरपि ॥
दरिद्रः स्यात् महारोगी सर्व्वलोकविनिन्दितः ।
विमुखी त्रिपुरा तस्य हसन्ती याति नित्यदा ॥
त्रिकूलाख्ये महापीठे मत्स्यं खादति यो नरः ।
न तस्य जायते सिद्धिः कल्पकोटिशतैरपि ॥
देविदेकोटिमुद्राख्यपीठयोरन्तरे वसन् ।
मद्यं दत्त्वा जपेद्यस्तु तस्य सिद्धिर्न जायते ॥
जालन्धरे महापीठे तथा मद्यं परित्यजेत् ।
वाराणस्यां महाभागे शिवभक्तिपरायणः ॥
एकया मुद्रया सिद्धिर्जायते नात्र संशयः ।
अन्तर्वेदिप्रयागे [च] मिथिलायां तथैव च ॥
मागधे मेखलायाञ्च मद्यात् सिद्धिः प्रजायते ।
तत्र देवाः प्रकुर्व्वन्ति छिद्रं मद्यरसं विना ॥
अङ्गवङ्गकलिङ्गेषु स्त्रिया सिद्धिर्भवेद्ध्रुवम् ।
तथैव सिंहलादौ च स्त्रीराज्ये द्रौपदीकृते ॥
राढायां मत्स्यमांसेश्च मुद्रयाङ्गनयापि च ।
गौडे च पञ्चभिर्दद्यैः सर्व्वसिद्धिः प्रजायते ॥
एवमन्येषु देशेषु पञ्चभिः सिद्धिरुत्तमाः ॥

तन्त्रान्तरे ।

दधिना समभागञ्च गुडं दत्त्वा दिनत्रयम् ।
वदरीमूलसंयुक्तं मद्यं भवति पार्व्वति ॥

तन्त्रान्तरे ।

कुलं शक्तिः समाख्याता तस्यां पूजादिकञ्च यत् ।
कुलाचारः स विज्ञेयः साधकस्येष्टदायकः ॥

समाप्तश्चायं ग्रन्थः ॥

शुभमस्तु शकाब्दाः १६४० । श्रीगङ्गाधर देवशर्म्मणः स्वाक्षरमिदं पुस्तकञ्च । कृष्णाय गोविन्दाय नमः ॥

The date given here seems to be the date of copying of the present MS whereas the date found in the beginning of the post-colophon appears to be the date of the MS from which the present MS was copied.

The above extract from the *Rudrayāmala* agrees generally with what appears to be the 18th chapter of the *Kulārṇava* in a Vaṅgīya Sāhitya Pariṣat MS (No. 602).

## 5906.

### 4730. *Kulārṇavatantram.*

Substance, country-made yellow paper. 9¼ × 4¼ inches. Folia, 44-53. Lines, 7 on a page. Extent in ślokas, 105. Character, Nāgara. Date. N.S. 924. Appearance, fresh. Incomplete.

The present MS contains only the ninth chapter of the work.

*Post Colophon :—*

संवत् ९२४ माघशुक्ले चतुर्दश्यां लिखितमिदम् ।

## 5907.

### 3714. *Kulārṇavatantram.*

Substance, country-made paper. 10¼ × 4½ inches. Folia, 14. Lines, 8 on a page. Extent in ślokas, 490. Character, Bengali. Appearance, old and dilapidated. Incomplete.

This MS runs from the beginning up to verse 39 of the fourth chapter of the work.

## 5908.

### 3917E. *Kulārṇavatantram.*

Substance, country-made paper. 14½ × 4½ inches. Folia, 39A–41A. Lines, 11 on a page. In tripāṭha form. Character, Bengali. Appearance, old and discoloured. Incomplete.

This MS contains what is called the "36th" chapter of the work.

*Beginning* :—

ॐ गुरवे नमः। श्रीशिव उवाच—

इत्था दुर्गों प्रवक्ष्यामि साधकानां सुखोत्तमम्।

*End* :—

तदैव सेवानिपुणो जनो वा तत्राश्चि चित्तं फलभाग् न चेश्वरः।

*Colophon* :—

इति कुलार्णवे देवीश्वरीसंवादे परमार्थ-तत्त्वज्ञानतरङ्गिण्यां नाम-
महात्म्यं षट्त्रिंशत् पटलः।

## 5909.

3917G. *Kulārṇavatantram.*

Substance, country-made paper. 14¼ × 4½ inches. Folia, 54B–83B. Lines, 11 on a page. Character, Bengali. Date, Śaka 1614. Appearance, old and dilapidated. Incomplete.

This MS runs up to verse 74 of the 11th chapter. The date of the MS is given at the end of the Muṇḍamālā-tantra which is completed at fol. 54B of the same MS.

## 5910.

4668. *Kulārṇavatantram.*

Substance, country-made paper. 17 × 6½ inches. Folia, 152–216 (as indicated on the right side of the leaves) or 1–65 (as indicated on the left side). Lines, 10 on a page. Character, Bengali. Appearance, fresh. Complete in 17 chapters.

The seven verses at the end of Avalon's edition of the work are not found in the present MS.

## 5911.

### 5912. *Kulārṇavatantram.*

Substance, country-made paper. 9 × 5½ inches. Folia, 123. Lines, 10 on a page. Extent in ślokas, 2,150. Character, modern Nāgara. Appearance, fresh. Complete in 17 chapters.

## 5912.

### 5862A. *Kulārṇavatantram.*

Substance, country-made paper. 9½ × 4½ inches. Folia, 1–5. Lines, 13 on a page. Character, Nāgara. Appearance, good. Incomplete.

This MS runs up to verse 117 of chapter I of the work. In the beginning there are three additional introductory verses not found in Avalon's edition of the work. They run as follows:—

श्रीगुरून् गणपतिं दुर्गां वटुकं शिवमच्युतम् ।
ब्रह्माणं गिरिजां लक्ष्मीं वाणीं वन्दे विभूतये ॥
अनाद्यायाखिलाद्याय मायिने गतमायिने ।
अरूपाय स्वरूपाय शिवाय गुरवे नमः ॥
पराप्रसादमन्त्राय सच्चिदानन्दमूर्त्तये ।
व्योमोव्योमस्वरूपाय चमत्काय नमो नमः ॥

## 5913.

### 166. कुलार्णवे ईशानसंहिता । *Īśānasaṃhitā from Kulārṇavatantram.*

Substance, country-made yellow paper. 18 × 3 inches. Folia, 9. Lines, 5 on a page. Extent in ślokas, 215. Appearance, good. Complete.

The manuscript has been noticed in L. I. 424. No such topic as dealt with in this MS is found in the printed editions of the *Kulārṇava.*

It is in the form of an interlocution between Nārada and Gautama and also between Śaṅkara and Pārvatī. It is a Vaiṣṇava work.

The present work obtains its name from the name of the sixth mouth of Śiva which is hidden and called Īśāna.

The six Āmnāyas of the Tantras describing the rites of various deities are stated to have issued from the six mouths of Śiva as follows (cf. also pp. 119-20 below):—

Fol. 3B. भुवनेशी चान्नपूर्णा महालक्ष्मीः सरस्वती ।
चतुर्वर्गप्रदा देव्यो मन्त्राद्यासाश्च कामदाः ॥
साधनानि च सर्व्वाणि पूर्व्ववक्त्रेण कीर्त्तिताः ।
प्रसाददक्षिणामूर्त्तिगोपाल-गरुडध्वजाः ॥
चतुर्वर्गप्रदा एते मन्त्राद्येषां ससाधनाः ।
दक्षवक्त्रेण कथिता मया भवविमुक्तये ॥
कृष्णनारायणौ विष्णुराघवौ नरसिंहकः ।
हयग्रीव-वराहाद्यास्तथान्ये शङ्करादयः ॥
चतुर्वर्गप्रदा लोके मन्त्राद्येषां ससाधनाः ।
प्रत्यक्-वक्त्रेण कथिता मया कारुण्यतः प्रिये ॥
काली तारा मर्द्दिनी च त्वरिता बगला तथा ।
जयदुर्गा तथा चान्या मातङ्ग्यादयः प्रिये ॥
युगे युगे पूर्णकला विशेषेण कलौ युगे ।
मन्त्राः ससाधनाद्यासां उदक्-वक्त्रेण कीर्त्तिताः ॥
त्रिपुरेशी तथा बाला तथा त्रिपुरभैरवी ।
त्रिपुटा त्रिपुरा नित्या तथा चान्याश्च देवताः ॥
चतुर्वर्गप्रदा नित्यं मन्त्राद्यासां ससाधनाः ।
ऊर्द्ध्ववक्त्रेण कथिता भुक्तिमुक्तिफले न्वयाः ॥
सूर्य्यचन्द्रौ हनूमांश्च गौराङ्गो ह्यपराजिता ।
प्रत्यङ्गिरा विषहरा तथा चान्याश्च देवताः ॥

चतुर्वर्गप्रदाश्चैमे कलिकाले विशेषतः ।
मन्त्राः ससाधनाश्चैषां गुप्तवक्त्रेण कीर्त्तिताः ॥
इत्येष कथितः कान्ते मम वक्त्रविनिर्णयः ।
गोपनीयः प्रयत्नेन न देयः पशुघातिने ॥

The name of Gaurāṅga in the sixth Āmnāya provokes a question from Pārvatī in reply to which Maheśvara emphasizes the divinity of Gaurāṅga and gives the details of his Tāntrika worship.

## 5914.

3764. **कुलार्णवे षट्कर्म्मविधिः ।** *Saṭkarmavidhiḥ from Kulārṇavatantram.*

Substance, country-made paper. $9\frac{1}{2} \times 4$ inches. Folia, 2. Lines, 9 on a page. Extent in ślokas, 30. Character, Nāgara. Appearance, fresh. Complete.

This work deals with the six black rites of the Tantras. This topic is dealt with, though not in identical language, in the 16th chapter of the *Kulārṇava*. The first three verses of the extract quoted below are found in *Śāradātilaka* (XXIII, 128–30).

*Beginning :—*

अथ षट्कर्म्मप्रयोगः ।
सूर्य्योदयं समारभ्य घटिकादशकं क्रमात् ।
ऋतव[श्च] वसन्ताद्याः दिवारात्रौ दिने दिने ॥
वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तसंसरात्(?) ।
हेमन्ते शान्तिकं प्रोक्तं वसन्ते वश्यकर्म्मणि ॥
शिशिरः स्तम्भने ज्ञेयो विद्वेषो ग्रीष्मके मतः ।
प्रावृट् उ[च्]चाटने ज्ञेया शरत् मारण[कर्म्मणि] ॥
सर्व्वाभिमुखतः कुर्य्यात् शान्तिकस्य कुलेश्वरि ॥

*Colophon :—* इति श्रीकुलार्णवे षट्कर्म्मविधिः ।

For an account of the contents of the Kulārṇavatantra cf. C. Chakravarti—*Extent and contents of the Kulārṇavatantra* (Annals of the Bhandarkar Oriental Research Institute, Vol. XIII, p. 206ff.).

## 5915.

163. **गुप्तसाधनतन्त्रम् ।** *Guptasādhanatantram.*

Substance, country-made paper. 19 × 3 inches. Folia, 16. Lines, 5-7 on a page. Extent in ślokas, 400. Character, Bengali. Date, Śaka 1691(?). Appearance, old and soiled. Complete in 12 chapters.

The work, in 12 chapters, has been published in the *Tantrasaṅgraha* of Rasikmohan Chatterji and described in L. II. 738. For other editions cf. BM Catalogue (1877–1892, p. 414; 1906–28, p. 1073).

*Post Colophon Statement :—*

ग्रहियत्त्ववडास्यप्रमितेऽब्दे माघमासे लिखितो श्रीराजकिशोर शर्म्मणा गुप्तसाधनतन्त्रकः ।

## 5916.

4666. *Guptasādhanatantram.*

Substance, country-made yellow paper. 16½ × 4¼ inches. Folia, 17. Lines, 7 on a page. Extent in ślokas, 400. Character, Bengali. Appearance, fresh. Complete in 12 chapters.

## 5917.

2760. *Guptasādhanatantram.*

Substance, country-made paper. 16½ × 4 inches. Folia, 4. Lines, 5 on a page. Extent in ślokas, 84. Character, Bengali. Appearance, new. Incomplete.

The present MS contains the 6th and the 7th Paṭala of the work.

## 5918.

### 159. गुरुतन्त्रम् । *Gurutantram.*

Substance, country-made paper. 15 × 5½ inches. Folia, 7. Lines, 7 on a page. Extent in ślokas, 190. Character, Bengali. Appearance, fresh. Complete.

The present MS has no division in chapters. The work is described in L. I. 247 in which the concluding colophon is given as belonging to the fifth chapter of the work. The beginning and end of the present MS agree with those of L.

## 5919.

### 1621. निर्व्वाणतन्त्रम् । *Nirvāṇatantram.*

Substance, country-made yellow paper. 14 × 3½ inches. Folia, 17. Lines, 8 on a page. Extent in ślokas, 550. Character, Bengali. Appearance, old. Complete in 14 chapters.

Printed in 14 chapters in *Tantrasaṃgraha* and *Sulabhatantraprakāśa.* For a description of the work cf. L. I. 274.

## 5920.

### 31. समयाचारतन्त्रम् । *Samayācāratantram.*

Substance, country-made paper. 9½ × 4 inches. Folia, 16. Lines, 9 on a page. Extent in ślokas, 300. Character, Nāgara. Appearance, old. Complete.

The present MS is described in L. II. 755, where it is stated to be in prose but as a matter of fact the work is mostly in verse. The portions of mantras and directions only are in prose. The work has been described also in HPR. II. 241.

The object of the work is given in the following verses (Fol. 1):—

शृणु देवि प्रवक्ष्यामि गुह्याद्गुह्यतरं महत् ।
समयाचारसङ्केतं तन्त्रं परमदुर्लभम् ॥ ६ ॥
पूजनादिषु यः कालो देवतानां पृथक् पृथक् ।
स कालः समयो नाम यं ज्ञात्वामृतमश्नुते ॥ ७ ॥
कालेष्वाचरणं देवि यस्य देवस्य यं विधिं ।
तं नाम समयाचारं देवानामपि दुर्लभम् ॥ ८ ॥
सङ्कीर्त्तनात् पुनर्देवि रहस्यानां रहस्यकम् ।
समयाचारसङ्केतं नाम्ना तन्त्रं प्रकीर्त्तितम् ॥ ९ ॥
अथवा समयाचारात् समयाचारमुच्यते ।
समया गोपनीयानां सदा गोप्या प्रकीर्त्तिता ॥ १० ॥

The origin of the six Āmnāyas is indicated:—

5B, पूर्व्वाम्नायस्तदा ज्ञातो यदा प्राची दिशि स्थितः ।
एवं पश्चिम आम्नायः पश्चिमस्यां दिशि स्थितः ॥ ६८ ॥
एवमुत्तर आम्नाय उत्तरस्यां दिशि स्थितः ।
मुखमूर्द्धगतं देवि यत्प्रोक्तं तव सन्निधौ ॥ ६९ ॥
स ऊर्द्ध आम्नायः कथितो देवानामपि दुर्लभः ।
अधोमुखं गतं देवि यत्प्रोक्तं गिरिशप्रिये ॥ ७० ॥
अध आम्नायः इत्युक्तं सत्यं सत्यं वरानने ।
षडाम्नायकथिताचोत्पत्तिक्रमनामतः ॥ ७१ ॥

In this enumeration the southern Āmnāya is omitted by inadvertence of the scribe or of the author. But it appears in the next extract which gives the names of different goddesses described in the various Āmnāyas:—

6A, यस्मिन् यस्मिंश्च ये देवाः कीर्त्तिताश्च वरानने ।
तांस्तान् देवान् प्रवक्ष्यामि साधका[नां] सुखाय च ॥ ७२ ॥

श्रीविद्याभेदसहिता बाला च त्रिपुरा च या।
भुवनेश्वर्य्यन्नपूर्णा च पूर्व्वाम्नायप्रकीर्त्तिताः ॥ ७३ ॥
बगलामुखी च दक्षिणी त्वरिता स्वफलप्रदा।
महिषमर्द्दिनी महालक्ष्मी दक्षिणाम्नायकीर्त्तिता ॥ ७४ ॥
कालिकाभेदसहिता ताराभेदैश्च संयुता।
मातङ्गी भैरवीच्छिन्ना तथा धूमावती मता ॥ ७५ ॥
उत्तराम्नायकथिता शीघ्रकामफलप्रदा।
समस्तभेदसहिता कालिका या प्रकीर्त्तिता ॥ ७६ ॥
हावि[श]त्यक्षरी नाम दक्षिणाम्नायसंश्रिका।
पराप्रसादो मन्त्रश्च ऊर्द्धाम्नायप्रकीर्त्तितः ॥ ७७ ॥
वागीश्वर्य्यादयो विद्या अधश्चाम्नायकीर्त्तिताः।
ऊर्द्धाम्नायो ह्यधश्चैव केवलं मोक्षदो भवेत् ॥ ७८ ॥

An enumeration of the various original Tantra works is given as follows:—

8B, नाना तन्त्राणि देवेशि पटलानि पृथक् पृथक् ॥ १२८ ॥
डामराणि च सर्व्वाणि तन्त्राणां हृदयानि च।
समासतः प्रवक्ष्यामि शृणु देवि वरानने ॥ १२९ ॥
चतुःषष्टीनि तन्त्राणि यामलान्यष्ट सुन्दरि।
डामराणि च त्रीणि स्युः कथयामि शुभानने ॥ १३० ॥
तन्त्राणां बहुधानाच्च मया पूर्व्वं प्रकाशितं।
यामलान्यत्र वक्ष्यामि डामराणि तथा पुनः ॥ १३१ ॥
विष्णुब्रह्मशिवानाञ्च यामलानि पृथक् पृथक्।
शक्तेर्गणपतेश्चैव स्कन्दस्य च पृथक् पृथक् ॥ १३२ ॥
सूर्य्याचन्द्रमसोश्चैव कथितानि वरानने।
उड्डीशडा[म]रं नाम भूतडामरकं तथा ॥ १३३ ॥
शक्ति-डामरकं नाम कथितानि च डामरम् ॥

It mentions Vijayākalpa as another work previously mentioned (v. 239).

## 5921.

### 3112. *Samayācāratantram.*

Substance, country-made paper. $10\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 23. Lines, 9 on a page. Extent in ślokas, 300. Character, Nāgara. Date, Samvat, 1944. Appearance, fresh. Complete.

*Post Colophon* :—

संवत् १९४४ । मोः कु आर मासे शुक्लपक्षे ॥ १० ॥ वार सोमारः ॥

श्रीशिवशङ्कराय नमो नमः ॥ श्रीरामानुजाय नमो नमः ॥

## 5922.

### 3172. *Samayācāratantram.*

Substance, foolscap paper. $15 \times 5$ inches. Folia, 9. Lines, 11 on a page. Extent in ślokas, 325. Character, Bengali. Appearance, discoloured. Complete.

## 5923.

### 11251. *Samayācāratantram.*

Substance, country-made paper. $11 \times 5$ inches. Folia, 1-7. Lines, 14 on a page. Extent in ślokas, 270. Character, Nāgara. Appearance, discoloured. Incomplete.

The present MS begins with the last foot of a verse marked 30.

## 5924.

### 3712. समयातन्त्रम् । *Samayātantram.*

Substance, country-made paper. $18 \times 3\frac{1}{2}$ inches. Folia, 39. Lines, 8 on a page. Extent in ślokas, 1,200. Character, Bengali. Appearance, dilapidated and pasted. Incomplete.

It contains the first nine Paṭalas and a portion of the tenth.

The topics dealt with in the work as well as the significance of the name of the deity Samayā have been indicated on Fol. 38A :—

कथितं परमज्ञानं समया सा समार्च्चनम् ।
कर्म्मयोगात्मकं वेदज्ञानयोगात्मकं परम् ॥
न्यासविन्यासनं भद्रं नित्यज्ञानपरापरम् ।
पूजासङ्केतममलं बलिसङ्केतमुत्तमम् ॥
जपसङ्केतमौग्रान-वह्निहोमविधानकम् ।
त्रिबीजसाधनं गुप्तं तथा भावप्रकाशनम् ॥
महाप्रयोगसङ्केतं संशयच्छेदकारणम् ।
... ... ... ... ...
काले सम्पद्यते सर्व्वं काल एव हि लीयते ।
सृष्टिसंहारयोर्देवि काल एव हि कारणम् ॥
कालभैरवरूपोऽहं त्वञ्च कालस्वरूपिणी ।
कालः समय एव स्यात् समया त्वं पराप्रिये ॥
अहं सामयिकस्तेन यस्मात्तव वशं सदा ॥

## 5925.

### 3161. वीरतन्त्रम् । *Vīratantram.*

Substance, country-made paper. Some of the leaves, 23 to 26, are of blue foolscap paper. 14 × 5½ inches. The leaves of foolscap—14 × 4 inches. Folia, 1–35 of which fol. 12–14 are missing. Lines, 8, 10 on a page. Extent in ślokas, 700. Character, Bengali. Appearance, discoloured. Complete in 14 chapters.

The MS contains fourteen chapters. L. I. 229 and MS No. 5927 *infra* have 15 chapters each. According to the last colophon given below it pertains to the *Vijayākalpa.*

*Colophon* :—

इति श्रीवीरतन्त्रे विजयाकल्पे चतुर्दशः पटलः ।

*Post Colophon* :—

श्रीकृष्णानन्दनाथस्य पुस्तकमिदम् ।

## 5926.

### 3386. *Vīratantram.*

Substance, country-made paper. 15 x 3¼ inches. Folia, 14. Lines, 8 on a page. Extent in ślokas, 400. Character, Bengali. Appearance, fresh. Complete in 8 chapters.

The present MS contains eight chapters. It omits the introductory verses as found in the two other MSS of the work described here and begins :—

श्रीभगवानुवाच ।

विना दुःखैर्विना पापैर्विना पुरश्चर्यादिभिः ।
सिद्धमन्त्रं प्रवक्ष्यामि शृणु पार्व्वति सादरम् ॥
येनानुष्ठितमात्रेण भोगेन मोक्षमाप्नुयात् ।
वीरतन्त्रं मया गुप्तं गोपनं सर्व्वकामदम् ॥
जीवानुग्रहसर्गेण गुरुवक्त्रात् प्रकाशितम् ।
गुरवः सर्व्वशास्त्राणां केवलं कारणं विधौ ॥
सिद्धयो न हि मन्त्राणां पारम्पर्य्यक्रमं विना ।
तस्मादौ गुरुपंक्तीनां विधानं कथ्यतेऽधुना ॥
पुरा मन्त्रप्रसङ्गेन पृष्ठवै प्राह शङ्करः ।

श्रीशङ्कर उवाच ।

मातर्देवि महाभागे वक्तुं मोक्षप्रवर्त्तिनि ।
इदानीं श्रोतुमिच्छामि गुरुक्रममनुत्तमम् ॥

श्रीप्रकृतिरुवाच ।

गुरुक्रमस्तु बहुधा मन्त्रविस्तारगौरवात् ।
कालानामप्यनादित्वात् तत्सर्वं कथयामि ते ॥
गुरुक्रमस्य चाज्ञानान्नष्टमार्गो भविष्यति ।
मन्त्रमार्गे मन्त्रविद्ये न तादृक् सिद्धिगोचरे ॥

*End :—*

अन्युत्पातादयो दोषा भूतप्रेतादिसम्मताः ।
नेच्छन्ति तां दिशं भीत्या उज्झिता देवताज्ञया ॥

*The Last Colophon :—*

इति वीरतन्त्रे षट्कर्म्मविवरणमष्टमः पटलः समाप्तः ।

*Post Colophon :—*

साक्षरेण लिखितं तन्त्रं माधवाख्येन मूढता ।

The contents of the work are given as follows on the obverse of the first leaf :—

प्रथमे गुरुक्रमाभिधानम् । द्वितीये ताराप्रकरणम् । तृतीये दक्षिणाकालिकाप्रकरणम् । चतुर्थे नित्यपूजाप्रकरणम् । पञ्चमे शवसाधनप्रकरणम् । षष्ठे उच्छिष्टचाण्डालिनीसिद्धिसाधनप्रकरणम् । सप्तमे प्रचण्डासिद्धिविधिप्रकरणम् । (In a later hand) अष्टमे षट्कर्म्मविवरण ।

## 5927.

### 3457. *Vīratantram.*

Substance, country-made yellow paper. $19\frac{1}{4} \times 4\frac{1}{2}$ inches. Folia, 17. Lines, 9 on a page. Extent in ślokas, 700. Character, Bengali. Appearance, fresh. Complete.

This MS contains 15 chapters like L. I. 229.

## 5928.

### 3178. कालीविलासतन्त्रम् । *Kālīvilāsatantram.*

Substance, Serampore paper. 13 x 5 inches. Folia, 115. Lines, 6 on a page. Extent in ślokas, 1,100. Character, Bengali. Appearance, fresh. Complete in 35 Paṭalas.

For a full description of the work see L. IX. 2963.

After the end of the work there are four lines of a work called Rudradīpikā which begins as follows:—

सहस्रशिवपूजायामेकोद्दिश्य तथा दश ।
पञ्च लिङ्गानि एकत्र कृत्वा पूजाफलं लभेत् ॥

## 5929.

### 8111A. तारातन्त्रम् । *Tārātantram.*

Substance, country-made paper. 13 x 4½ inches. Folia, 7. Lines, 8 on a page. Extent in ślokas, 150. Character, Bengali. Appearance, fresh. Complete.

The work, in six chapters, has been published by the Varendra Research Society of Rajshahi (1913).

## 5930.

### 3348. कालीतन्त्रम् । *Kālītantram.*

Substance, country-made paper. 16 x 3½ inches. Folia, 18. Lines, 7 on a page. Extent in ślokas, 600. Character, Bengali. Appearance, discoloured. Complete in 11 Paṭalas.

*Beginning* :—

कैलासशिखरारूढं देवदेवं जगद्गुरुम् ।
उवाच पार्व्वती देवी भैरवं परमेश्वरम् ॥

पार्व्वत्युवाच।

देवदेव महादेव सृष्टिस्थितिलयात्मक।
किन्नु ब्रह्ममयं धाम श्रोतुमिच्छामि तत्त्वतः॥

*The Post Colophon Statement* :—

After three lines containing Bījamantras and a verse, we have the following śloka :—

यथा व्यालस्थाली-ललितकरताली-द्रुमलता
क्षमाजाली काली हरति मतिशालीध्वजलता।
दृढ-व्यालव्याली-घनवलयमालीव सकलम्
कलं काली कीदृग् यदि मनसि काली विजयते॥

अयं श्लोकः काशीस्थकेनचित् महापुरुषेण कृतो नवद्वीपे प्रकाशितः।

[This MS was found missing at the time of printing the catalogue.]

## 5931.

### 3454. *Kālītantram.*

Substance, country-made paper. $16\frac{1}{4} \times 4$ inches. Folia, 8. Lines, 9 on a page. Extent in ślokas, 288. Character, Bengali. Appearance, faded. Complete in 11 Paṭalas.

The work, in 12 chapters, has been published in the Sanskrit Sāhitya Pariṣat Series (Calcutta, 1922). The *Kālītantra* in 21 ullāsas as edited and published by Kāliprasanna Vidyāratna (Calcutta, 1892) is an entirely different work dealing with Yoga practices. The 12th chapter of the Sāhitya Pariṣat edition is absent in the present MS.

## 5932.

### 4588. *Kālitantram.*

Substance, country-made paper. 17½ × 4 inches. Folia, 1–14. Lines, 6 on a page. Extent in ślokas, 300. Character, Bengali. Appearance, old and discoloured. Incomplete in the beginning.

This MS also contains 11 chapters like the above. The present MS omits the first 9 verses of the Sanskrit Sāhitya Pariṣat edition of the work and begins from the 10th verse.

## 5933.

### 5621D. *Kālitantram.*

Substance, palm-leaf. 14 × 1¼ inches. Folia, 68A–87. Lines, 4 on a page. Extent in ślokas, 320. Character, Udiyā. Appearance, good. Complete in 12 chapters (which do not all agree with those of the S.S.P. edition).

After the last colophon there are 7 lines, relating to offerings to she-jackals ( शिवाबलिप्रकार ).

## 5934.

### 4589. कौलतन्त्रम् । *Kaulatantram.*

Substance, country-made paper. 16½ × 4 inches. Folia, 4. Lines, 7 on a page. Extent in ślokas, 100. Character, Bengali. Appearance, fresh. Complete in four chapters.

The work deals with the worship of Kālī and Tārā according to the Kaula form.

*Beginning* :—

श्रीगुरवे नमः ।

कैलासशिखरारूढं भैरवं भूतपावनम् ।

पप्रच्छ परमप्रीता भैरवी सफलेक्षणा ॥

भैरव्युवाच ।

देवेश परमेशान किं त्वया भण्यतेऽनिशम् ।
किन्तद्ब्रह्ममयं धाम किम्वा तस्य जपात्फलम् ॥
विधिना केन देवेश साधनीयं वदस्व तत् ।

भैरव उवाच ।

किं जानामि वरारोहे स्वरूपं तस्य भाषितम् ॥
यदाख्यातं शङ्करेण गुरुणा मम सुन्दरि ।
तत्सर्व्वमवदत्तथ्यं शङ्करः स महेश्वरः ॥
तथापि नरलोकानां परित्राणाय एच्छसि ।
अतएव प्रवक्ष्यामि यद + + सुलोचने ॥

*End* :—

इति ते कथितं कौलतन्त्रमुत्तमलक्षणम् ।
हृदिस्थं तारिणीदेव्या बौद्धदेवेन भाषितम् ॥

*Colophons of the different chapters* :—

2A, इति कौलतन्त्रे ताराकल्पे तारारहस्यं नाम प्रथमः पटलः; 3B, इति कौलतन्त्रे ताराकल्पे ताराचारो नाम द्वितीयः पटलः; 4B, इति कौलतन्त्रे कालीकल्पे तृतीयः पटलः; इति कौलतन्त्रे कालीकल्पे चतुर्थः पटलः ।

After the colophon there are two verses quoted from the *Tārākalpa* referring to the excellence and functions of Kaulas.

## 5935.

### 3167. निरुत्तरतन्त्रम् । *Niruttaratantram.*

Substance, country-made paper. 15 x 3½ inches. Folia, 30. Lines, 7 on a page. Extent in ślokas, 725. Character, Bengali. Appearance, discoloured. Incomplete.

The present MS contains chapters 1 to 14 and one line and a half of the 15th. The work has been printed, in 15 chapters, in the *Tantrasaṅgraha* as also in the *Sulabhatantraprakāśa*. It has been described in L. I. 285 and HPR. I. 206.

## 5936.

### 4669. *Niruttaratantra.*

Substance, country-made paper. 16½ × 6 inches. Folia, 30. Lines, 10 on a page. Extent in ślokas, 1,196. Character, Bengali. Appearance, discoloured. Complete.

The present MS contains 15 chapters.

## 5937.

### 5973. निरुत्तरभट्टारकम् । *Niruttarabhaṭṭāraka.*

Substance, country-made paper. 11 × 5½ inches. Folia, 8B–17. Lines, 11–14 on a page. Extent in ślokas, 300. Character, Nāgara. Appearance old. Complete in five chapters.

The work deals with Yoga.

*Beginning* :—

श्रीगणेशाय नमः । श्रेयसे ।

ॐ नमः शिवाय ॥

नमो माया दिक्काल ग्रास कुलान्तकृत् (?) ।
व्योमातीतं निराभासं स्पन्दनास्पन्दवर्ज्जितम् ॥
अलभ्यं सर्व्वमालम्बं निरालम्बं निराकृतिं ।
गुणागुणपरिभ्रान्तिनिष्क्रान्तिप्रशान्तिसागरम् ॥
... ... ... ... ...
... ... ... ... ...

श्रीदेव्युवाच ।

महा-संशय मे नाथ मायाध्वप[रि]वर्त्तिनम् ।
अनेन भेदगूढार्थं श्रुतं मे इन्द्रजालवत् ॥
सिद्धान्तं तत्र वै शैवं ज्ञानभेदं कुलागमम् ।
महार्थगमनं चैव तत्त्वार्थगहनं तथा ॥

शब्दार्थं नैव जानामि पदवाक्यप्रमाणतः ।
भ्रान्तबुद्धिरहं देव भ्रमिता + + शासने ॥
केनोपायेन देवेश ज्ञातव्यं सर्व्वरूपतः ।
येनेदं ज्ञायते सत्यं दम्भशाठ्यविवर्ज्जितम् ॥
नन्दि(क)स्कन्दकुमाराद्यैर्भृङ्गिणा योगिनीकुलैः ।
मुनिभिर्ब्रह्म + + + सूर्य्यचन्द्रमसादिभिः ॥
कथितं परमं ज्ञानं न ध्यानं त्रिविधं मम ।
तदादिकं यदस्तीति वद मे सुरनायक ॥
नित्यभक्ता त्वहं देव कर्म्मणा मनसा गिरा ।
प्रसादं कुरु संक्षेपादाक्षेपाद्येन मुच्यते ॥
आयासरहितं ज्ञानं प्राणायामविवर्ज्जितम् ।
धारणाध्याननिर्मुक्तं योगतत्त्वविवर्ज्जितम् ॥
ब्रह्मचर्यक्रियाहीनं निष्क्रियं तीर्थवर्ज्जितम् ।
प्रसन्नात्मं जगन्नाथ वदैतद्भक्तवत्सलम् ॥

9B, श्रीभैरव उवाच ।

कथयामि यथातथ्यं कपटज्ञानवर्ज्जितम् ।
भ्रमभ्रान्तिं परित्यज्य ग्राहयेत् परमं पदम् ॥
ध्यानान्तकरणैर्मुक्तं ध्यानपंचदिकैरपि(?) ।
चिन्तया रहितं चित्तं निश्चितं परमं पदम् ॥
कुम्भपूरकरेचाद्यैः प्रशान्तपवनैः सह ।
दशवायोः सुच्छन्दानि दशसाहस्रिका[णि] च ॥
प्रत्येकं च सहस्रात्मा प्राणाद्याश्च धनञ्जयः ।
दशसाहस्रनाद्यङ्गं संस्थितं कुलमध्यगम् ॥
वायुच्छन्दं परित्यज्य तत्त्वच्छन्दं तथैव च ।
मन्त्रजालं महादुर्गं क्रियाजालं परित्यज्य ॥
शास्त्रजालमनेकार्थं त्यज सर्व्वं पलालवत् ।

*Colophons of the different chapters :—*

9A, इति भैरवस्रोतसि निवत्तरभट्टारके प्रथमः पटलः; 11B, इति भैरवस्रोतसि संग्रहे निवत्तरे द्वितीयपटलः; 12A, इति भैरवस्रोतसि निर्गते निवत्तरे तृतीयः पटलः; 14A, ०चतुर्थः पटलः; 17B, इति भैरवस्रोतसि निर्गते निवत्तरभट्टारके पञ्चमः पटलः। समाप्तं निवत्तरभट्टारकं नाम योगशास्त्रम्।

## 5938.

### 5220. तोडलतन्त्रम्। *Todalatantra.*

Substance, country-made paper. 11½×2¾ inches. Folia, 26. Lines, 6 on a page. Extent in ślokas, 490. Character, Bengali. Appearance, fresh. Complete in 10 chapters.

The work, in ten chapters, has been printed in the *Vividhatantrasaṃgraha* and the *Sulabhatantraprakāśa.* L. I. 385 is stated to contain the beginning of an 11th chapter.

## 5939.

### 4652. वामकेश्वरतन्त्रम्। *Vāmakeśvaratantra.*

Substance, country-made yellow paper. 19½×4¼ inches. Folia, 11. Lines, 6 on a page. Extent in ślokas, 232. Character, modern Bengali. Appearance, fresh. Incomplete.

The present manuscript contains Paṭalas LI to LV dealing with topics like *Abhiṣeka, Pūrṇābhiṣeka* and festivities (*yātrās*) in honour of Sakti like those in honour of Viṣṇu.

*The 51st Paṭala begins :—*

भैरव्युवाच।

वैकयज्ञानं महादेव कथमुत्पद्यते प्रभो।
नराकृतिं गुरुं मन्ये देवताश्च शिलामयीम्॥

मन्त्रश्चाक्षररूपश्च कथमेकं भवेच्छिव ।
भावाः कतिविधा देव आचारा विविधाः कथम् ॥
आश्रमागाश्च देवेश कौ मम प्रियवानघौ ।
एवं सर्व्वं महादेव विशेषेण ब्रवीषि मे ॥

*The 55th Paṭala ends :—*

एवं साम्वत्सरीं यात्रां कृत्वा साधकसत्तमः ।
गुरोः प्रसादाद्देवेशि शिवतुल्यो न संशयः ॥

*Colophon :—*

इति श्रीवामकेश्वरतन्त्रे भैरवभैरवीसंवादे यात्राप्रकरणं नाम पञ्चपञ्चाशत् पटलः ॥

## 5940.

### 3446. *Vāmakeśvaratantra.*

Substance, country-made paper. 15½ × 3½ inches. Folia, 13. Lines, 9 on a page. Extent in ślokas, 460. Character, Bengali. Appearance, discoloured. Complete in five Paṭalas.

This MS contains the first five chapters of the Nityāṣoḍaśikārṇava section of the work. This section with the commentary of Bhāskararāya has been published in the Ānandāśram Sanskrit Series of Poona (1908). The fifth chapter, though stated to be complete in the present MS, runs only up to verse 34 of the printed edition which contains 44 verses.

The colophons here are fuller than those found in the printed edition of the work.

*The last colophon runs :—*

इति श्रीवामकेश्वरतन्त्रे सर्व्वतन्त्रोत्तमे बजरूपाष्टकप्रस्तावे त्रिपुराजपहोमविधिः पटलः पञ्चमः ।

*Post Colophon :—*

श्रीपरमदेवतायै नमः ॥ श्रीकृष्णानन्दशर्म्मणामिदं पुस्तकम् ॥

## 5941.

3162. *Vāmakeśvaratantra.*

Substance, country-made yellow paper. 14×3 inches. Folia, 15. Lines, 6 on a page. Extent in ślokas, 380. Character, Bengali. Appearance, fresh. Incomplete.

Same as above. This MS, however, contains the first three chapters and a portion of the fourth.

## 5942.

2792. वामकेश्वरतन्त्रे [योगिनीहृदयम्] ।

*Yoginīhṛdayam from the Vāmakeśvaratantra.*

Substance, country-made paper. 12¼×3 inches. Folia, 17. Lines, 9 on a page. Extent in ślokas, 350. Character, Bengali. Appearance, dilapidated. Complete.

Yoginīhṛdaya is the title of the last three chapters of the Vāmakeśvaratantra, the *Nityāṣoḍaśikārṇava* section of which, containing the *Yoginīhṛdaya* as its concluding part, has been published in the Ānandāśram Sanskrit Series of Poona. The *Yoginīhṛdaya* section alone has been published with the commentary of Amṛtānandanātha in the *Prince of Wales Sarasvati Bhavana Texts* Series of Benares (1923-4).

## 5943.

2793. *Yoginīhṛdayam from the Vāmakeśvaratantra.*

Substance, foolscap paper. 18¼×5 inches. Folia, 10. Lines, 8 to 10 on a page. Extent in ślokas, 324. Character, Bengali. Appearance, fresh. Incomplete.

This MS contains the first chapter (Fol. 1–4A), 67 verses and a half of the second chapter (Fol. 4A–6A),

105 verses and a portion of verse 106 of the third chapter (Fol. 7B–10B). In Fol. 6A-7B a portion of Amṛtānanda's commentary (e.g. on verses 6–13 of the first chapter) is found.

## 5944.

4585. *Yoginīhṛdayam from the Vāmakeśvaratantra.*

Substance, country-made yellow paper. 16¼ × 4 inches. Folia, 32. Lines, 6 on a page. Extent in ślokas, 768. Character, modern Bengali. Appearance, fresh. Complete.

Besides the three well-known chapters (चक्रसङ्केत, मन्त्रसङ्केत and पूजासङ्केत) of which the work consists, there are three more chapters in this MS as in L. I. 282.

## 5945.

1708. *Yoginīhṛdayam from the Vāmakeśvaratantra.*

Substance, country-made paper. 9½ × 4 inches. Folia, 13. In tripāṭha form. Character, Nāgara. Date, Saṃvat 1779. Appearance, old. Incomplete.

The present MS contains only the first chapter. It is accompanied by the commentary योगिनीहृदयदीपिका by Amṛtānandanātha, a disciple of Puṇyānandanātha.

*Post Colophon Statement :—*

संवत् १७७९ वैशाख कृष्णैकादश्यां रवौ लिखितमिदं वैद्यनाथ-सुतेन विष्णुदेवेनेति शिवम् ॥

ऊर्द्ध्वाम्नायगुरूपदेशभुवनं ॐकारसिंहासनं

सिद्धाधार-समस्त-वेदमथनं षट्चक्रसंभेदनम् ।

पश्चादि शिवतत्त्वज्योतिरमलं पूर्णं प्रभाशोभितम्

शान्तं सद्गुरुपादुकां भज मनश्चैतन्यचन्द्रोदयम् ॥ १ ॥

निर्वैरीकरणं महापह्नवणं वह्नेर्विना ज्वालनं
नाडीचालन-नादविन्दुकलनं देहस्य संशोधनम् ।
आत्मज्योतिनिदर्शनं कलयितं स्वच्छन्दमत्युंजयम्
एवं ह्यात्मविदो वदन्ति महतां चिन्मात्रमूर्त्तिं भजे ॥ २ ॥
जगद्वन्द्यावेतौ गणपवटुकौ विश्वविनुतौ
जगद्रक्षाशीलौ भयनिरतसान्निध्यवरदौ ।
रथाङ्के सन्नद्धौ रविशशिशिखाभानुज्वलदृशौ
मयि स्यातां रक्षापरवशधियौ सद्गुणमयौ ॥ ३ ॥

The introductory verse of the commentary, as found in L. I. 283 and in the printed edition of the work, is not given as such in this MS, but is given as the last verse of the post-colophon statement as quoted above.

## 5946.

### 8661. योगिनीहृदयदीपिका । *Yoginīhṛdayadīpikā.*

*By Amṛtānandanātha.*

Substance, country paper. 11 × 4 inches. Folia, 109 (1–30 + 1–29 + 1–50). Lines, 10 on a page. Extent in ślokas, 3,200. Character, Nāgara. Date, Saṃvat 1853. Appearance, fresh. Complete.

*Post Colophon Statement :—*

सम्वत् १८५३ मिति भाद्रपद वद्य प्रतिपद्यां भृगौ वैषद्वं
लिखितं लेखकपाठकयोः शुभं भवतु । नमस्त्रिपुरसुन्दर्य्यर्पणमस्तु ॥

## 5947.

### 3917D. सिद्धिवीरेश्वरीतन्त्रम् । *Siddhivīreśvarītantra.*

Substance, country-made paper. 14½ × 4¼ inches. Folia, 38B–39A. Lines, 11 on a page. In Tripāṭha form. Character, Bengali. Appearance, old and discoloured. Incomplete.

This MS contains only the fifth chapter of the work.

*Beginning* :—

अथातः संप्रवक्ष्यामि सिद्ध्युपायं प्रियेश्वर ।
अज्ञात्वा + + का देवि अजसा गुरुपादुकाम् ॥
रात्रौ पर्य्यटनं नास्ति साधकः (कौकिलः) [कौलिकः] कथम् ।
कथं मन्त्राश्च सिध्यन्ति मन्त्रार्थज्ञानतः प्रिये ॥
कुब्जिका मूर्द्धि संजप्ता हृदि सेतुम्विचिन्तयेत् ।
महासेतुं विशुद्धौ तु महद्वारे विचिन्तयेत् ॥

*End* :—

तथा जपादिकं सर्व्वं निष्फलं नात्र संशयः ।
तस्मात् सर्व्वप्रयत्नेन प्रजपेन्मूर्द्धि कुब्जिकाम् ॥

*Colophon* :—

इति श्रीसिद्धिविरेश्वरीतन्त्रे कर्णिकापटलः पञ्चमः ।

## 5948.

### 5465. सिद्धयोगेश्वरीतन्त्रम् । *Siddhayogeśvarītantra.*

Substance, Nepalese paper. 12 × 3½ inches. Folia, 2–73. Lines, 6 on a page. Extent in ślokas, 1,300. Character, Newari. Date, N.S. 793. Appearance, fresh. Incomplete.

The MS from which the present MS was copied was apparently defective, for occasional lacunæ are met with in the latter, as in the 18th leaf which contains only two lines. It contains 32 chapters. The work is differently called *Siddhayogeśvarītantra*, *°mata* in different colophons and *Bhairavavīrasaṃhitā* in one colophon (Fol. 45A).

*Colophons of the different chapters* :—

2B, इति सिद्धयोगेश्वरीतन्त्रे प्रथमः पटलः ; 4B, इति सिद्धयोगेश्वरीतन्त्रे व्याप्तिपटलो द्वितीयः ; 8A, इति सिद्धियोगेश्वरीमते शक्तित्रयोद्धारस्तृतीयः पटलः ; 8B, ०विद्याङ्गोद्धारश्चतुर्थः पटलः ; 9A, इति लोकपालोद्धारः पञ्चमः

पटलः; 12B, इति समयमण्डलपटलः षष्ठः; 15A, इति सिद्धयोगीश्वरीतन्त्रे सप्तमः पटलः; 19B, इति सिद्धियोगेश्वरी नवमः पटलः; 20B, इति विद्याव्रतपटलो दशमः; 21B, इति सिद्धेश्वरीमते एकादशमः पटलः; 23A, इति सिद्धयोगीश्वरीमते द्वादशमः पटलः; 24B, सिद्धियोगीश्वरमते त्रयोदशमः पटलः; 24B, इति सिद्धियोगीश्वरमते पञ्चदशमः पटलः; 28A, इति सिद्धयोगीश्वरीमते षोडशमः पटलः; 32A, इति सिद्धयोगेश्वरीमते सप्तदशमः पटलः; 34A, इति सिद्धयोगेश्वरीमते अष्टादशमः पटलः; 35B, इति सिद्धियोगीश्वरीमते एकोनविंशतितमः पटलः; 42A, इति सिद्धयोगेश्वरीमते खचक्रव्यूहविंशतिमः पटलः; 45A, भैरववीरसिंहता[या]मेकविंशतिमः पटलः; 47B, इति योगिनीचक्रनिर्णयं द्वाविंशतितमः पटलः; 50A, इति सिद्धयोगेश्वरीमते त्रयोविंशतिमः पटलः; 52B, इति चक्रोद्धारनामिदं चतुर्विंशतिमः पटलः; 58B, इति सिद्धयोगेश्वरीमते सिद्धिमण्डलविन्यासपञ्चविंशतिमः पटलः; 62B, इति सिद्धयोगेश्वरीमते मेलकाख्यषड्विंशतिमः पटलः 65B, ०सप्तविंशतिमः पटलः; 68B, ०अष्टाविंशतिमः पटलः; 71B, ०एकोनत्रिंशतिः पटलः; 72A, ०त्रिंशतिमः पटलः; 73A, ०एकत्रिंशतिमः पटलः; last colophon, इति सिद्धयोगेश्वरीमते द्वात्रिंशतिमः पटलः समाप्त ।

*Post Colophon Statement* :—

नेपालवत्सरे जाते वह्निरन्ध्रसमुद्रके ।
अनन्तसिंहलिखितं सिद्धयोगेश्वरीमतम् ॥
पुस्तकलिखनपरिश्रमज्ञो विद्वज्जनो नान्यः ।
सागरलङ्घनखेदं हनूमानेकः परं वेत्ति ॥

## 5949.

### 183. नीलतन्त्रम् । *Nīlatantra.*

Substance, country-made paper. 15 × 5½ inches. Folia, 25. Lines, 7 on a page. Extent in ślokas, 700. Character, Bengali. Appearance, fresh. Complete in 17 chapters.

This MS is described in L. I. 463. L. I. 215 seems to be the MS of a different work though it bears

the same name. The present MS contains 17 chapters, whereas the printed editions of it as published in the *Vividhatantrasaṃgraha* and in the *Sulabhatantraprakāśa* contain 12 chapters.

The succession of Gurus for Nīlasarasvatīvidyā is given in Fol. 7A as follows :—

ऊर्द्ध्वकेशो व्योमकेशो नीलकण्ठो वृषध्वजः ।
दिव्यौघा[ः] सिद्धिदा वत्स सिद्धौघान् शृणुतापरतः ॥
वशिष्ठः कूर्मनाथश्च नीलनाथो महेश्वरः ।
हरिनाथ (वा)मानवौघान् शृणु वक्ष्यामि सद्गुरून् ॥
भवावती भानुमती जया विद्या महोदरी ।
सुखानन्द परानन्द पारिजातः कुलेश्वरः ॥
विरूपाक्षो देवहूती कथितं तारिणीकुलम् ।

Buddhist deities like Akṣobhya and Amitābha are here referred to as follows :—

Fol. 7B :—

अनेन मनुना देवि परिवारान् समर्चयेत् ।
अक्षोभ्यं गन्धपुष्पाद्यैः तारिणीमूर्द्ध्नि पूजयेत् ॥
यथा वैरोचनं शङ्खं पाण्डरं पद्मनाभकम् ।
अमिताभं यजेन्मन्त्री चतुर्दिक्षु चतुर्दले ॥

A good many Tantras are here referred to as follows (Fol. 17B) :—

शिव उवाच ।

श्रुतं भैरवतन्त्रञ्च योनितन्त्रं कुलार्णवम् ।
कुलाचारं तथा गुप्तसाधनं गुरुतन्त्रकम् ॥
निर्वाणं समयाचारम् वीरतन्त्रं श्रुतं पुरा ।
डामरं डामरोड्डीशं श्रुतं कालीविलासकम् ॥
सप्तकोटिमहाग्रन्थं मम वक्त्रविनिर्गतम् ।
यामलं देवि ब्रह्माद्यं यामलं विष्णुयामलम् ॥

शिवयामलकं देवि यामलं मित्रयामलम् ।
शक्तियामलकं देवि कथितञ्च श्रुतं त्वयि ॥
तथापि हृदयग्रन्थिरस्ति ते परमेश्वरि ।
पुरा सुकथितं तन्त्रं पुरा देवि त्वया श्रुतम् ॥
सङ्केतं समयाचारं तन्त्रसङ्केतकं तथा ।
कुलसङ्केतकं नाम सङ्केतं बहुविस्तरम् ।
श्मशानसाधनं भद्रे शवसाधनमेव च ॥

22A, एवं विधानसम्भूतं श्रुतं तन्त्रञ्च मोहनम्
कु(लौ)लोड्डीशं कुलीनस्य योगिनीहृदयं श्रुतम् ।
सम्मोहनं वीरतन्त्रं श्रुतं श्रीतन्त्रमुत्तमम् ।
कुलार्णवं तथा कालीतन्त्रं कालीविलासकम् ॥
श्रीकालीकल्पलतिका श्रुता परमसादरात् ।
मतभेदे च गुप्ता सा पूजाप्रकटनाशिनी ॥

## 5950.

### 3165. *Nīlatantra.*

Substance, country-made paper. 17 × 4 inches. Folia, 28. Lines, 6–8 on a page. Extent in ślokas, 750. Character, Bengali. Appearance, old and discoloured. Complete.

The present MS contains 15 chapters. This work does not agree with the one described under the previous No. or with the printed edition of the work of the same name. The beginning agrees with that of *Bṛhannīlatantra* in 9 chapters, published in the *Sulabhatantraprakāśa* and the *Tantrasamgraha*, and with that of a MS of it in 23 chapters as described in L. IV. 1655.

*Colophons of the different chapters :—*

2A, इति नीलतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे भैरवपार्व्वतीसंवादे सिद्धमन्त्रकथनं नाम प्रथमः पटलः; 4B, इति नीलतन्त्रे भैरवपार्व्वतीसंवादे सपर्य्याविधिर्नाम द्वितीयः पटलः; 5B, इति श्रीनीलतन्त्रे यन्त्रानुष्ठानविधिर्नाम तृतीयः पटलः;

6A, इति श्रीनीलतन्त्रे पुरश्चरणविधिर्नाम चतुर्थः पटलः ; 7A, इति श्रीनीलतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे होमविधिर्नाम पञ्चमः पटलः ; 7B, ०तर्पणविधिर्नाम षष्ठः पटलः ; 12B, ०भैरवपार्व्वतीसंवादे सप्तमः पटलः ; 14B, ०अष्टमः पटलः ; 18A, ०नवमः पटलः ; 20B, ०दशमः पटलः ; 21A, इति श्रीनीलतन्त्रे तारिणीस्तोत्रं समाप्तम् ; 22A, ०एकादशः पटलः ; 24A, ०द्वादशः पटलः ; 26A, ०त्रयोदशः पटलः ; 26B, इति श्रीनीलतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे चतुर्दशः पटलः ; 28A, ०पञ्चदशः पटलः ।

## 5951.

### 323. शक्तिसङ्गमतन्त्रम् । *Śaktisaṅgamatantra.*

Substance, country-made paper. 18×4 inches. Folia, 1–319. (The number of folia should really be 309 as after Fol. 56 the numbers 67 etc., are given in place of 57, etc.) Lines, 7, 8 on a page. Extent in ślokas, 8,950. Character, Bengali. Date, Śaka 1674. Appearance, old. Incomplete.

The first part of this work in 21 chapters has been published in the Gaekwad's Oriental Series (Baroda, 1932) as also by P. Sarma (Bharat Subhacintak Press, Deoghar). This MS has been described in L. I. 405. The work is also described in I.O. IV. 2589 and Bik., No. 1320.

The numbers of chapters are occasionally wrongly indicated. Chapters 18ff in the first part of the work and 17ff in the third are respectively indicated through inadvertence as chapters 17ff and 16ff. Thus these parts really consist of 21 chapters each and not of 20 as would appear from the last colophons. Also according to I.O. (*loc. cit.*) the first part contains 20 chapters, the last of which agrees with the 21st chapter of the printed edition.

In Book II (Fol. 78A–198) colophons of chapters 10–18 and of chapters 21-22 and 27, are not found. Two chapters are indicated as 25 (Fol. 134A and 135B).

After the colophon of chapter 34 (Fol. 144B) is found the colophon of a chapter 30 (Fol. 146B). Presumably chapter 46 is wrongly indicated as 36 (Fol. 168A). This Book runs up to a portion of chapter 63 and not 65 as would appear from the description in L.

In Book III (Fol. 198, 201A–254A) the first two chapters are missing and the colophons of chapters 4–9 are not found.

In Book IV (Fol. 254–319A) the last chapter appears to be 11th and not 10th as given in the colophon, for 10 chapter-colophons are already found in the previous portions of the MS.

The names of the different parts of the work are not clearly mentioned in the colophons. The name *Tārāsūkta* occurs in the colophons of chapters 12 and 14 of Part I, chapters 25, 40, 51, 52, and 53 of Part II, chapters 4–10 of Part IV. The names *Tapasyākhaṇḍa* and *Kālīkhaṇḍa* are found respectively in the colophons of chapters 10 and 11 of Part III.

## 5952.

### 4337. *Śaktisaṅgamatantra.*

Substance, country-made paper. 16¾ × 4¼ inches. Folia, 1–72. Lines, 7 on a page. Extent in ślokas, 1,800. Character, Bengali. Appearance, fresh. Incomplete.

The present MS contains chapters XXIV–LVII of the second part of the work. The introductory portion of chapter XXIV is not found here. Of the 57th chapter we have here only the beginning.

## 5953.

### 4775. परातन्त्रम् । *Parātantra.*

Substance, Nepalese paper. 9¼ × 2¼ inches. Folia, 1–45 of which Fol. 3 is missing. Lines, 6 on a page. Extent in ślokas, 680. Character, Newari. Appearance, old and discoloured. Complete.

The chapters are not indicated in the present MS but it is divided into sections the names of which are indicated by sectional colophons. On comparing it with the next MS it is found that the first six sections of this MS comprise the first chapter, and the other three sections comprise respectively the 2nd, 3rd, and 4th chapters of the work. The work has been described in IO. IV. 2590.

*Beginning* :—

ॐ नमः श्रीपरायै ।

वज्रसिद्धिसमाकीर्णे श्मशाने करवीरके ।
तत्र वीरगणाः सर्व्वे महाहस्तोलकूते ॥
निवर्त्तितमहाचक्रे योगे चिदम्बडामरे ।
महानन्दे महास्फारे गणडाकिनीयाचिते ॥
ब्रह्माद्या मातरश्चाष्टौ क्षेत्रेशो भैरवादयः ।
गणेशवटुकाः सिद्धिः माढचक्रे तु मेलके ॥
श्रीनाथादिगणाः सर्व्वे वीरनाथावलाश्रिते ।
सिद्धिनाथां प्रकाशेन सन्तोषितकुलेश्वरः ॥
सर्व्वमुद्रां परित्यज्य सानन्दोल्लासिमानसः ।
सामरस्यस्थितं देवं पृच्छते कुलसुन्दरी ॥

श्रीदेव्युवाच ।

सर्व्वशम्भो भवज्ञानं त्वत्प्रसादाच्छ्रुतं मया ।
यामलाष्टकपूर्व्वन्तु तन्त्रानेकाविधानि च ॥

शिरश्छेदस्य बहुधा महामन्त्रानबहुकम् ।
परातन्त्रे च चिन्तामसागरं वा महामतम् ॥
चतुर्विंशति वै लक्षा श्रुताः सर्व्वेऽपि धारिताः ।
इदानीं संशयो जातो तवैव वचनात् प्रभो ॥
एका सा परमा शक्तिः न द्वितीया परेश्वरि ।
एका शक्ति[ः] महामाया विश्वं व्याप्य व्यवस्थिता ॥
नादिमध्या न चान्तास्तु यया सर्व्वं प्रवर्त्तते ।
त्वयोक्ता न द्वितीया सा तन्त्रे कुलकुलार्णवे ॥
एषा संधार्य्यते विश्वं एका त्रैलोक्यपूजिता ।
एतदेव च यो ज्ञात्वा षडाम्नाय कथं प्रभो ॥
षट्सिंहासनगा प्रोक्ता देव्यः षण्नायिका स्मृता ।
षडाम्नायविभिन्ना चेदेका सा परमा कथम् ॥
अभिन्नाप्यथ भिन्ना चेद्वद देव जगत्पते ।
कथमेका पराशक्ति[ः] विभिन्ना परमेश्वरी ॥
षट्सिंहासनगा देवी नायिका षट् प्रकीर्त्तिता ।
षडाम्नायविभिन्ना चेत् किं संज्ञाभेदनामतः ॥
पूर्व्वसिंहासना देवी याम्यसिंहासने स्थिता ।
सिंहासन पश्चिमाख्यां सौम्ये सिंहासना परा ॥
सिंहासनमूर्द्धगता ह्यधः सिंहासनाश्रया ॥
षट्सिंहासनसंस्थिता षडाम्नायेति कीर्त्तिता ।
कथं सिंहासनं संज्ञा स्थिताह्याम्नाये देवता ॥
तन्त्रे वा यामले वापि चतुर्विंशतिलक्षके ।
ग्रन्थे त्वया सूचिका वै षडाम्नाय विशेषतः ॥
एका परा विभिन्ना किं षट्सिंहासनमाश्रिता ।
आद्या शक्तिः परामेका कथं षट्शक्तितां गता ॥
यामाद्या प्रकृतौ सूक्ष्मा चितिरूपेण संस्थिता ।
बिन्दुमालिनीरूपा सा सर्व्वं व्याप्य व्यवस्थिता ॥

एतन्मे महतीं श्रद्धा निर्णीतुं परमेश्वरीम् ।
हृदयग्रन्थिसन्दृढं सर्व्वज्ञ परमेश्वर ॥
यद्येका परमा शक्तिराद्या प्रकृतिरीश्वरी ।
किमर्थं कस्य रक्षार्थं षडाम्नाय प्रकीर्त्तिता ॥

*End* :—

इत्येतत्तु समाख्यातं कालिकायाः कुलक्रमम् ।
विधानं परमं दिव्यं शाक्ते कालिकमागते ॥
गोपनीयं प्रयत्नेन न दद्याद् यस्य कस्यचित् ।
गुरुभक्तिरतो यो हि महाशाक्तमयो तु सा ॥
रम्यपुष्पफलं दृष्ट्वा वस्त्रालङ्कारमेव च ।
स्वात्मप्रियाणि भक्ष्याणि यत्किञ्चित् भुवि दुर्लभम् ॥
गुरवे प्रथमं दत्त्वा ततः स्वात्मनि धारयेत् ।
गुर्व्वागमक्रमादिना पूजाकाले प्रजापयेत् ॥
गुरुसन्तुष्टमानेन सन्तुष्टा कालिकाक्रमम् ।
येनेदं लिखेतेच्छास्त्रं यस्य हस्तेषु तिष्ठते ॥
यत्र स्थितं प्रपूज्यन्ते विधिवत् परमेश्वरी ।
सन्निविष्टन्तु षण्मासं यावज्जीवति चैव हि ॥
पुस्तकं पूजितं येन इदं कालिकुलक्रमम् ।
समग्रं पूजितं तेन कालि कालविनाशिनी ॥
आब्रह्मस्तम्बसकलं कालेन कलयेत् सदा ।
तं कालं कालिका देवी कारयेत् सा युगे युगे ॥
न कालिसदृशो यज्ञो न कालिसदृशो तपः ।
न कालिसदृशो धर्म्मो न कालिसदृशो भुवि ॥
जीवन्मुक्तः स विज्ञेयो महापापयुतः स वै ।
महायोगी विजानीहि कालिकापदसंश्रिता ॥
अहं मृत्युंजयो देवो मत्कुलार्च्चनतोऽभवत् ।
कलौ विशेषतः काली पूजितव्या प्रयत्नतः ॥

देवतासंयुतं विप्रं वर्ज्जितस्थानकं प्रिये ।
यो ज्ञाता भैरवो देवो श्रोता रुद्रसमो भवेत् ॥
स एकधा च बहुधा साधकानां हिताय च ।
नानातन्त्रप्रवाहास्तु नानाम्नायत्वमागता ॥
तन्त्रभेदे नामभेदा एका शक्तिः सहस्रधा ।
मकुला च महामाया चण्डा कापालिनी शिवा ।
चामुण्डा चर्चिका चण्डा सृष्टिस्थित्यन्तकालिनी ।
अनाख्या च महाभासा गुह्यकाली भया परा ॥
सिद्धिलक्ष्मीर्विश्वलक्ष्मीर्महाप्रत्यङ्गिरा स्मृता ।
सुन्दरी त्रिपुरा चाथ उग्रचण्डा प्रकाशिनी ॥
विभिन्ना बहुधा जाता नानाभेदसमाश्रिता ।
एका सानेकरूपा च याति या दिव्यचक्षुषा ॥
स एव साधकः श्रेष्ठः सिद्धिज्ञानस्य भाजनम् ।
अनुष्ठानरता सर्व्वे सिद्धिभागी भवेद्ध्रुवम् ॥

Colophons of the different sections of the work :—

Fol. 6B—इति श्रीपूर्व्वेश्वरी पूर्व्वाम्नायः ।

Fol. 8B—इति श्रीपरातन्त्रे निःश्रेश्वरी दक्षिणाम्नाय ।

Fol. 11A—इति श्रीपरातन्त्रे पश्चिमसिंहासने कुब्जिका ॥ ३ ॥

Fol. 13A—इति श्रीपरातन्त्रे उत्तराम्नाय कालिक्रमः ॥ ४ ॥

Fol. 17B—इति श्रीपरातन्त्रे श्रीविद्या ऊर्द्ध्वाम्नायः ॥ ५ ॥

Fol. 18B—इति श्रीपरातन्त्रे महास्रोतसि शिरश्छेदे करवीरमहायागे परातन्त्रे क्रमे द्वादशसाहस्रिकायां षडाम्नायभेदसूत्रम् ॥ ६ ॥

[Here ends the first Paṭala.]

Fol. 32B—इति श्रीमहास्रोतसि शिरश्छेदे करवीरयागे परातन्त्रे क्रमे द्वादशसाहस्रिकायां कालिक्रमनिर्णयसूत्रम् ॥ २ ॥

[Here ends the second Paṭala.]

Fol. 38A—इति श्रीमहाकौलतन्त्रे श्रिरश्छेदे कालीरहस्ये परातन्त्रे परमार्थनिर्णयः ।

[Here ends the third Paṭala.]

Fol. 45B—इति श्रीमहाकौलतन्त्रे श्रिरश्छेदे महाकालीरहस्ये परातन्त्रे कालिकुलक्रमः समाप्तः ।

[Here ends the fourth Paṭala.]

## 5954.

### 4779. *Parātantra.*

Substance, Nepalese paper of yellow colour. $9\frac{1}{4} \times 4\frac{1}{4}$ inches. Folia, 43. Lines, 9 on a page. Extent in ślokas, 500. Character, Nāgara. Appearance, fresh. Complete.

Same as above.

Colophons of the different chapters which are numbered in this MS :—

Fol. 18A—इति श्रीपरातन्त्रे पार्व्वतीश्वरसंवादे षडाम्नायक्रमकथनं नाम प्रथमपटलः ।

Fol. 30B— ०कालीकुलक्रमनिर्णयं नाम द्वितीयपटलः ।

Fol. 36B— ०परमार्थनिर्णयकथनं नाम तृतीयपटलः ।

Fol. 43B— ०पुरश्चरणक्रमकथनं नाम चतुर्थपटलः समाप्तः ।

## 5955.

### 10725. *Parātantra.*

Substance, country-made paper. $12 \times 3\frac{3}{4}$ inches. Folia, 9. Lines, 9 on a page. Extent in ślokas, 243. Character, modern Newari. Date. Samvat, 287 (?). Appearance, fresh. Complete.

The present MS contains only the first chapter of the work.

*Post Colophon* :—

संवत् २८७ मिति श्रावेन लिखित्वा ।

The date, given here, is not borne out by the handwriting, which is very modern.

## 5956.

### 3400. तन्त्रचूडामणौ महापीठनिरूपणम् ।

*Mahāpīṭhanirūpaṇa from the Tantracūḍāmaṇi.*

Substance, country-made paper. 10 × 3½ inches. Folia, 3. Lines, 9 on a page. Extent in ślokas, 66. Character, Bengali. Appearance, very old and faded. Complete.

This work describes 51 *pīṭhas* while the work noticed under No. 5880 above describes 18.

*Beginning* :—

श्रीश्वर उवाच ।

मातः परात्परे देवि सर्व्वज्ञानमयीश्वरि ।
कथ्यतां मे सर्व्वपीठशक्तिभैरवदेवता ॥

देव्युवाच ।

शृणु वत्स प्रवक्ष्यामि दयालो भक्तिवत्सल ।
याभिर्विना न सिध्यन्ति जपसाधनतत्क्रिया[ः] ॥
एकपञ्चाशतं पीठं शक्तिभैरवदेवता ।
अङ्गप्रत्यङ्गपातेन विष्णुचक्रक्षतेन च ॥
+ + + वसुधा देवहिताय त्वयि कथ्यते ।
ब्रह्मरन्ध्रं हिङ्गुलायां भैरवो भीमलोचनः ॥

*End* :—

अज्ञात्वा भैरवं पीठं पीठशक्तीश्च शङ्कर ।
प्राणनाथ न सिध्येत कल्पकोटिशतैरपि ॥

न देयं परशिष्याय निन्दकाय दुरात्मने ।
शठाय क्रूरकर्म्माय दत्त्वा मृत्युमवाप्नुयात् ॥
दद्यात् शान्ताय शिष्याय मन्त्री मन्त्रार्थसिद्धये ॥

*Colophon* :—

इति तन्त्रचूडामणौ शिवपार्व्वतीसंवादे महापीठनिरूपणं समाप्तम् । ॐ तत्सत् ।

## 5957.

### 5303. *Mahāpīṭhanirūpaṇa from the Tantracūḍāmaṇi.*

Substance, Serampore paper. $17\frac{1}{2} \times 3\frac{1}{2}$ inches. Folia, 2. Lines, 9 on a page. Extent in ślokas, 70. Character, Bengali. Appearance, fresh. Complete.

Same as above. The colophon of the present MS, apparently through the copyist's error, writes Candracūḍāmaṇi in place of Tantracūḍāmani.

## 5958.

### 3711. तन्त्रचूडामणिसारः । *Tantracūḍāmaṇisāra.*

Substance, country-made paper. $18 \times 4$ inches. Folia, 12. Lines, 8 on a page. Extent in ślokas, 200. Character, Bengali. Appearance, worn and pasted. Incomplete.

This MS contains only one chapter dealing with details of Tāntric worship.

*Beginning* :—

शिवः शैवाश्च विप्रास्ते अपि सर्व्वत्र देशिकाः ॥
गणेशो गणपत्याश्च गणदीक्षाप्रभुर्मतः ॥
सरः सौरास्तथा वत्स विष्णोर्विष्णुपरायणाः ।
दिव्यौघगुरवो देवि सिद्धौघगुरवस्तथा ॥

मानवौघाः समासेन कथयामि तवाग्रतः ।
सर्व्वतन्त्रेषु मन्त्रेषु प्रोक्ता मन्त्रचतुष्टयी ॥

*Colophon* :—

इति तन्त्रचूडामणिसारे भावचूडामणौ पटलः ।

## 5959.

### 676. ऊर्द्धाम्नायसंहिता । *Ūrddhvāmnāyasaṃhitā.*

Substance, country-made paper. 13 × 5 inches. Folia, 15. Lines, 10 on a page. Extent in ślokas, 300. Character, Nāgara. Appearance, tolerable. Complete in twelve chapters.

This is a treatise on Vaiṣṇavite faith in the form of an interlocution between Nārada and Vyāsa.

For a description of the work see L. I. 243 and Oxf. 301b. The work has been printed in Bengali characters with Bengali translation by Abhayā Charaṇa Tarkanidhi (Calcutta, 1285 B.S.).

It is a very late work as Gaurāṅga or Caitanya, the great Vaiṣṇava reformer of Bengal, is here referred to as an Avatāra in place of the Buddha and it gives the *mantra* for his worship.

## 5960.

### 2821. *Ūrddhvāmnāyasaṃhitā.*

Substance, country-made paper. 16½ × 5¼ inches. Folia, 4. Lines, 10 on a page. Extent in ślokas, 90. Character, Bengali. Appearance, fresh. Incomplete.

This MS contains the first three chapters and the beginning of the fourth.

## 5961.

### 4648. *Ūrddhvāmnāyasaṃhitā.*

Substance, country-made yellow paper. Folia, 8. Lines, 6 on a page. Extent in ślokas, 100. Character, Bengali. Appearance, fresh. Incomplete.

This MS contains the first four chapters of the work and a few lines of the fifth.

## 5962.

### 4608. ऊर्द्ध्वाम्नायतन्त्रम् । *Ūrddhvāmnāyatantra.*

Substance, country-made yellow paper. $16 \times 3\frac{1}{4}$ inches. Folia, 16. Lines, 6 on a page. Extent in ślokas, 325. Character, modern Bengali. Appearance, fresh. Incomplete.

The present MS begins from the third chapter and reaches up to a portion of the sixth. It deals with the nature of the human body, of Brahman and of the greatness of the guru.

*Beginning* :—

देव्युवाच ।

शरीरं कीदृशं नाथ मुक्तिर्वा केन कर्म्मणा ।
इदानीं श्रोतुमिच्छामि ब्रूहि मे शशिशेखर ॥

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि शरीरं कर्म्मरूपिणाम् ।
रजस्वला च या नारी विशुद्धा पञ्चमे दिने ॥
पीडिता कामबाणेन ततः पुरुषमीक्षते ।
भगलिङ्गसमायोगान्मैथुनं स्यात्तथा तयोः ॥
अन्योन्यस्पर्शनादेव जायते च महत् सुखम् ।
क्षरते च तथा रेतः प्राणापानविसंस्थिते ॥

क्षितिरापस्तथा तेजो वायुराकाशमेव च ।
सर्व्वेषां तत्र तनुः स्यात् देहस्थं रक्तबीजयोः ॥
गर्भिरन्ध्रे तथा देवि भाम्यते च समीरणैः ।
कुम्भकारो यथा चक्रे घटते च घटादिकम् ॥
तथा समीरणो गर्भे घटते प्राणिनां तनु ।
कललं चैकरात्रेण बुद्बुदं पञ्चमे दिने ॥
शोणितं दशरात्रेण मांसपिण्डं चतुर्दशे ।
मासैके चैव सम्पूर्णो मांसपिण्डोऽङ्कुरायते ॥
आदौ संजायते बीजो ब्रह्माण्डे सहस्राङ्कुरः ।
तस्य मध्ये सुमेरुश्च कङ्कालदण्डरूपकः ॥
चराचराणां सर्व्वेषां देवादीनां विशेषतः ।
आलयः सर्व्वभूतानां मेरोरभ्यन्तरेऽपि च ॥
प्रदीपकलिकाकारो जीवो हृदि सदा स्थितः ।
रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः ॥
गुणबद्धस्तथा जीवः प्राणापानेन कृष्यते ।
जीवस्य परमेशानि परिवारगणान् शृणु ॥

*End:—*

यावतः कुरुते जन्तुः सम्बन्धान् विषयप्रियान् ।
तावन्तस्य विशन्त्येते शरीरे शोकसङ्करः ॥
स्वदेहमपि जीवोऽयं त्यक्त्वा याति महेश्वरि ।
स्त्रीमातृपितृपुत्रादिसम्बन्धः केन हेतुना ॥
दुःखमूलं हि संसारः स यस्यास्ति स दुःखितः ।
तस्य त्यागः + + + + +

## 5963.

3175. **काल्यूर्द्ध्वाम्नायतन्त्रम् ।** *Kālyūrddhvāmnāyatantra.*

Substance, Serampore paper. 13 × 4½ inches. Folia, 25. Lines, 10 on a page. Extent in ślokas, 540. Character, Bengali. Appearance, discoloured. Complete.

The present MS, as does also the one described in L. V. 1743, contains chapters I–V. The work is also described in CS. V. 22, where no reference is made to the number of chapters, and in VSP where the work is called *Ūrddhvāmnāyatantra*.

## 5964.

### 2896. श्यामामोदतरङ्गिणी । *Śyāmāmodataraṅgiṇī.*

Substance, country-made yellow paper. 17×4 inches. Folia, 12. Lines, 5 on a page. Extent in ślokas, 210. Character, Bengali. Appearance, fresh. Complete.

The present MS contains 12 chapters. The work deals with the efficacy of the different mantras of Kālī (e.g. ककारमनु—2B, आकारमनु—3A, लकारमनु—3B, ईकारमनु—5A). It also lays down in brief the rules for her worship.

*Beginning* :—

श्रीपार्व्वत्युवाच ।

भगवन् सर्व्वतत्त्वज्ञ महाभूत परात्पर ।
नमामि नाथ देवेश भवन्तं जगदीश्वरम् ॥
त्वन्माया जगतीव्यापा यया संमोहिताः सुराः ।
त्वमेव जगतां कर्त्ता त्वमेव परमेश्वरः ॥

... ... ... ... ...

महाभूत उवाच ।

... ... ... ... ...
... ... ... ... ...

एकैव शून्यरूपास्ति तस्याः सृष्टिहतीच्छया ।
काली भवति सा साक्षात् सा नित्याप्यभिधीयते ॥

तस्या इतीच्छया कालो जायते परमेश्वरि ।
तदिच्छया महातारा ततोऽपि त्रिपुरा परा ॥
ततः सर्व्वा महाविद्या भक्तचिन्तार्थकल्पिताः ।
कालीकालसमाख्यातब्रह्मविष्णुशिवादयः ॥
ब्रह्मेच्छया जगत् सर्व्वं विष्णोर्विचलपालने ।
शिवेच्छया जगद्ध्वंसो देवि निश्चितमीरितम् ॥

... ... ... ... ...

ककारः कालिका साक्षात् ककारः सर्व्वसिद्धिदः ।
कदाचित् केन रूपेण भ्रमविज्ञानतोऽपि वा ॥
यः स्मरेत् मोक्षमाप्नोति सत्यं मे निश्चिता मतिः ।

*End* :—

दिव्यभावमतं देवि कथितं चादियामले ।
तत्कृत्वा सिद्धिमायाति शिवरूपो भवेद्यदि ॥

*Last Colophon* :—

इति श्यामामोदतरङ्गिण्यां महाभूतप्रोक्तायां द्वादशः पटलः ॥

## 5965.

### 6077. शिवनृत्यतन्त्रम् । *Śivanṛtyatantra.*

Substance, Kashmere paper. 8¼ × 6½ inches. Folia, 9. Lines, 12, 13 on a page. Extent in ślokas, 80. Character, Śāradā. Fol. 1–2A are written in modern Kashmeri. Appearance, new. Complete.

The work deals with different mystic diagrams of Tāntrik worship and the present MS contains nine chapters.

*Beginning* :—

श्रीगणेशाय नमः ।
ॐ श्रीदेव्यै सिद्धिदायिन्यै नमः ।

श्रीभैरव उवाच ।

ॐ महान्यासावसाने तु परिपप्रच्छ पार्व्वती ।

गिरिशं [f]शिरसा नत्वा चन्द्रार्द्धकृतशेखरम् ॥

श्रीदेव्युवाच ।

देवदेव महादेव सृष्टिस्थित्यन्तकारक ।

पूर्व्वमुक्तानि यन्त्राणि कथयस्व कृपानिधे ॥

श्रीदक्षिणामूर्त्तिरुवाच ।

श्रृणुष्वावहिता + + गिरिजे प्राणवल्लभे ।

अकथ्यं परमार्थेन तथापि कथयाम्यहम् ॥

*End* :—

इदं गोप्यतरं तन्त्रं तवैवाग्रे प्रकाशितम् ।

किं बहूक्तेन देवेशि कलौ कल्पतरूपमम् ॥

*Colophons of the different chapters* :—

1B, इति दक्षिणामूर्त्तिपार्व्वतीसंवादे शिवतन्त्रे नवकोष्ठो(?)विधि प्रथमः पटलः; 2A, पञ्चविंशतिको द्वितीयः पटलः; 3A, एकोनपञ्चाशं कोष्ठविधिस्तृतीयः पटलः; 3B, एकाशीतियन्त्रं चतुर्थः पटलः; 5A, पञ्चमः पटलः; 5B, षष्ठः पटलः; 6B, सप्तमः पटलः; 7A, चतुःष + + विधिरष्टमः पटलः; 9A, शतकोष्ठयन्त्रं नवकोष्ठयन्त्रं नवमः पटलः । समाप्तम् ।

*Post Colophon Statement* :—

सं २७ माघवति प्रतिपदि विद्याकृष्णपालुना स्वार्थे लिखितम् ।

The reverse of the last leaf and one entire leaf, not numbered, give various diagrams.

## 5966.

### 9557. शिवताण्डवम् । *Śivatāṇḍava.*

Substance, country-made paper. 12×5 inches. Folia, 17. Lines, 14 on a page. Extent in ślokas, 714. Character, Nāgara. Appearance, old. Complete.

The work appears to be divided in two parts, and the present MS comprises the latter part in 15 chapters.

*Beginning* :—

श्रीगणेशाय नमः ।

कजसमजनिष्यन्दलहरीललितालकैः ।
कवलीकृतविश्वौघपुराणकरिणे नमः ॥

देव्युवाच ।

देवदेव महादेव जगन्नाथ जगत्पते ।
त्वत्प्रसादाच्छ्रुता नाथ विद्याभेदान्ह्यनेकशः ॥
वद मे कृपया नाथ सद्यः प्रत्ययकारकं ।
प्राणान्तं मे करिष्यामि यदि नो कथ्यतेऽधुना ॥

ईश्वरोवाच ।

म+कार सहस्राणि वारितानि पुनः पुनः ।
स्त्रीस्वभावाच तरले किं पृच्छसि वदस्व तत् ॥

देव्युवाच ।

सूचितस्त्वं पुरा नाथ ताण्डवं न प्रकाशितं ।
नृत्योत्सुकेन रुद्रेण यथावृत्तं पुरा कृतम् ॥
ताण्डवान्तर्गतं कृत्यं षट्सु कर्मसु मे वद ।

ईश्वरोवाच ।

अप्रकाश्यमिदं देवि प्राणैः कण्ठगतैरपि ।
तव स्नेहात् प्रवक्ष्यामि नराणां वाञ्छितप्रदं ॥
किंवा कर्त्तुं प्रक्ष्यते च ताण्डवेन विना नरः ।

*End* :—

न दारिद्र्यवशं यान्ति पुत्रपौत्रादिभिः सह ।
स(ह) देवेशः सिद्धयोगं स्यात् दशयोजनमायतं ।
यत्र तिष्ठति देवेशि लिखितं शिवताण्डवम् ।

*Colophons of the different chapters :—*

Fol. 2A, इति शिवताण्डवे देवीश्वरसंवादे प्रथमः पटलः; 3A, ०द्वितीयः पटलः; 4A, ०तृतीयः पटलः; 5B, ०चतुर्थः पटलः; 6B, ०पञ्चमः पटलः; 8B, ०षष्ठः पटलः; 9A, ०सप्तमः पटलः; 11A, ०अष्टमः पटलः; 12A, ०महाविद्योपाख्यानं नाम पटलः; 12B, ०दशमः पटलः; 13A, ०एकादशः पटलः; 14A, ०द्वादशः पटलः; 14B, ०त्रयोदशः पटलः; 15B, ०चतुर्दशः पटलः; 17B, ०इति शिवताण्डवे पार्वतीश्वरसंवादे उत्तरखण्डे पञ्चदशः पटलः। समाप्तोऽयं ग्रन्थः।

*Post Colophon Statement :—*

हरिज्ञायाचक्रवर्त्तिनः पुस्तकमिदं। शुभमस्तु।

## 5967.

### 9556. *Śivatāṇḍava.*

Substance, country-made paper. 13 × 5½ inches. Folia, 21. Lines, 8–16 in a page. Extent in ślokas, 900. Character, Nāgara. Appearance, old. Incomplete.

This MS contains chapters 12, 13, and 14 of the first part. The second part is referred to by Nīlakaṇṭha in his commentary (No. 5968 ff) on XII. 5 of the work.

*Beginning :—*

परमभैरव उवाच।

अथ देवेशि वक्ष्यामि परमाद्भुतकारणम्।
यन्न कस्यचिदाख्यातं तत्ते वक्ष्यामि साम्प्रतम्॥
शृण्वैकमनाः कान्ते मत्तमातङ्गगामिनि।
नव्यवस्तुपरिज्ञानं पृथक् पृथक् यथा तथा॥
वश्यार्थे भूर्ज्जपत्रे तु मोहने रौप्यपत्रके।
मारणे लोहपत्रे तु स्तम्भने पैत्तलं मतम्॥

विदेशे तु श्मशानस्य चीवरं समुदाहृतम् ।
आकर्षे सौसत्नं प्रोक्तं राज्यार्थे ब्रह्मरत्नकम् ॥

*End* :—

\+ + यन्त्रं यन्त्रराजाभिधं तुभ्यं मयोदितम् ।
गोपनीयं प्रयत्नेन स्वयोनिरिव पार्व्वति ॥

*Colophons of the chapters* :—

Fol. 4A, इति श्रीसर्व्वतन्त्रोत्तमोत्तमे पार्व्वतीश्वरसंवादे लेख्यकथनं नाम द्वादशः पटलः; 11A, इति श्रीसर्व्वतन्त्रोत्तमोत्तमे दक्षिणामूर्त्ति-पार्व्वती-संवादे नगेन्द्रप्रयाणे शिवताण्डवमहातन्त्रे नवकोष्ठकात्मकयन्त्रकथनं नाम त्रयोदशः पटलः; 21A, इति श्रीदक्षिणामूर्त्तिपरमभैरवसंवादे सर्व्वतन्त्रोत्तमोत्तमे नगेन्द्र-प्रयाणे शिवताण्डवषोडशकोष्ठलिखनप्रकारकथनं नाम चतुर्दशः पटलः समाप्तः ।

## 5968.

### 3323. *Śivatāṇḍavatantra.*

Substance, country-made paper. 14 × 5¼ inches. Folia, 57. In tripāṭha form. Character, Nāgara. Date, Saṃvat 1897. Appearance, fresh. Incomplete.

The present MS is accompanied by Nīlakaṇṭha's commentary and contains chapters XII–XIV of the first part. The commentary is described in HPR. I. 360. In the beginning of the commentary the author refers to several other works by himself, e.g. the commentaries on *Mantrabhāgavata*, *Mantrarāmāyaṇa*, and *Mantramahābhārata*. The authoritativeness of the Tantras as also of the mantras, both in Sanskrit and the vernaculars, is discussed and it is argued that the Tantras form part of the Purāṇas.

The genealogy and the achievements of the family of the royal patron of the commentator are given thus (Fol. 1B):—

यद्राज्यं प्राप्य नाकं हसति महमही अक्षतं नन्दनत्वम्
प्राप स्वः समकक्षीपदमचलमभूत् पूर्व्विकानेरनाम्नी ।

शूरः श्रीमान् वदान्यः शमदमसहितो नीतिशिक्षागुरूणाम्
आद्यः सोऽद्यापि कीर्त्या जगति विजयते रायकल्याणमल्लः ॥

समजनि विक्रमनगरे राजा श्रीरायसिंहाख्यः ।
यस्मिन् ददति गजौघान् गजपतिभावं गतोऽविपालोऽपि ॥

दीपादिव प्रदीपस्तस्माच्छ्रीशूरसिंहोऽभूत् ।
मारवधूवोढारं यं लब्धात्मानम् उद्वूढं मेने ॥

वदान्यानां मूर्द्धि स्फुरतु लभतां शूरसुततां
कुरूणामीशानानवतु ककुभो वा विजयतां ।
परप्रीतश्रीको विजयविभितो भूविधुरितः
कथं वा राधेयः कलयतु महाकर्णसमताम् ॥

श्रीमाननूपपूर्णेन्दुः कर्णक्षीरार्णवोद्भवः ।
यत्कीर्त्तिकौमुदी भाति विश्वसन्तापनुत्तये ॥

लोह-दारु-दृषदामिवोदराद्यसारशिवताण्डवादिह ।
केन दीपकरणेन कः पुमान् यन्त्रवित्तमुपनीय दर्शयेत् ॥

जयत्यनूपभूपोऽसौ यदाज्ञाबलयोगतः ।
भिन्दन्त्यभेद्यमप्यर्थं शौर्य्यपाण्डित्यशालिनः ॥

श्रीमत् स्फूर्जदनूपभूपतिमहाज्ञात्रे निसर्गोज्ज्वले
श्रीमत्सद्गुरुवाक्यबीजनिचयानुप्ता समुत्पादितः ।
श्रीमच्चौधरिनीलकण्ठवप्त्रिना वर्षं विना भूयसे
भूयात् दिव्यफलाय यन्त्रलतिकारामोपमोत्यद्भुतः ॥

The name of the commentary is thus indicated (Fol. 2A):—

शिवताण्डवटीकेयमनूपारामसंस्थिता ।
यन्त्रकल्पद्रुममयी द[द्या]द्वोऽभीष्टसन्ततिम् ॥

The beginning of the text is found in Fol. 8A, the first seven leaves being taken up with the commentator's introduction (*upodghāta*).

*The Last Colophon :—*

इति श्रीमत्समस्तसामन्तचूडामणि-मरीचिमञ्जरीसमर्चित-पादपीठोपान्तभूमिना श्रीमहाराजाधिराज-कर्णमहाभूप-सूनुना श्रीमदनूपसिंहेन प्रेरितपदवाक्यप्रमाणमर्य्यादाधुरन्धर-चतुर्धरवंशावतंस-गोविन्दसूरिसूनोर्नीलकण्ठस्य कृतौ श्रीशिवताण्डवीय अङ्ग-यन्त्रव्याख्याने अनूपारामसंज्ञे षोडशकोष्ठलेखनप्रकारकथनं नाम चतुर्दशः पटलः समाप्तः। समाप्तेयं टीका।

*Post Colophon Statement :—*

संवत् १८९७॥ माघशुक्ल १३॥ श्रीगुरवे नमः॥ श्रीकृष्णाय नमो नमः॥

## 5969.

### 5566. *Śivatāṇḍavatantra.*

Substance, country-made paper. 11 × 5 inches. Folia, 58. In tripāṭha form. Character, Nāgara. Date, Saṃvat 1917. Appearance, fresh. Incomplete.

This MS also contains chapters XII–XIV inclusive of the first part of the work. The text is accompanied by the commentary of Nīlakaṇṭha.

*Post Colophon Statement :—*

संवत् १९१७ भाद्र शुक्लतिथौ विद्याधरद्विवेदिना लिखितम्।

## 5970.

### 9477. *Śivatāṇḍavatantra.*

Substance, country-made paper. 10 × 4 inches. Folia, 9. Lines, 12 on a page. Extent in ślokas, 214. Character, Nāgara. Appearance, fresh. Fragmentary.

It contains 27 verses and a portion of the 28th of Chapter XII of the work and is accompanied by the commentary of Nīlakaṇṭha.

## 5971.

### 5720A. *Śivatāṇḍavatantra.*

Substance, country-made paper. 9¾ × 4½ inches. Folia, 1-127. Lines, 11 on a page. Character, Nāgara. Appearance, discoloured. Incomplete at the end.

The MS contains Chapter XII and 45 verses of Chapter XIII. It is accompanied by the commentary Mallādarśa by Ghanaśyāma. The commentary is full of polemic discussions and deals with the work proper from Fol. 29A, the previous portion being devoted to preliminary discussions.

*Beginning* :—

श्रीराजराजेश्वराय नमः ।

स्वभक्तत्वाभावेऽप्यपरसुरभक्तत्वविरहात्

स्वपाल्यत्वं मत्वा रुचिरतरकामानसुजनं ।

प्रयच्छन्तीं + + + + वसतीन् सत्वरतरं

माहिष्मत्याः कमपि भज चेतः प्रतिदिनम् ॥

कौवेर्यां दिशि तारकेत्यभिधया ख्यातोऽस्ति कश्चिद् गिरिः

गङ्गायाः सविधे हि तत्र नृपतिः श्रीसाहमल्लोऽभवत् ।

यं प्राप्यास्ततभानुभानुवनभित्कन्दर्पकल्पद्रुता

संदेहं बहवेदिनोऽपि मनुजा आकल्पमापेदिरे ॥

तस्माज्जातः श्रीघनश्याममल्लः सन्तं तातं राज्यलक्ष्मीर्विहाय ।

यत्तं भेजे सूचितं तद्धि कोन्यो लक्ष्मीनाथः श्रीघनश्यामदेवात् ॥

तदीयः सुतः श्रीमल्लैवम्मनामा

नृपालः स्ववंशावतंसोऽभवं तः (?) ।

वरेण्यं यमाज्ञर्षिं सन्तोऽयमीश्रो

जयत्यर्थिसार्थार्थितायुष्यवृद्धिः ॥

सत्यास्तन्त्वगिरो भवन्ति तदनुध्यानेन तत्स्था गुणाः
यात्यर्थैवमसौ नृपो भगवतः श्रीरामचन्द्रस्य यत् ।
ध्यानादिककलत्रतासुरवरावासोक्तसत्सेतुता-
शम्भुस्थापकतादिकानिह गुणानाभादायत्युत्तमान् ॥
अमुष्यैवानन्या भवति करुणा लोकनिवहे
मतां दत्त्वा द्रव्यप्रभृति बहुदुःखं शमयतः ।
समुद्भाव्यर्थौघोद्भवदमितदुःखव्ययकृते
दुरूहां यन्त्रालीं प्रकटयितुमाद्यां रचयतः ॥
यन्त्रावलीं रचयतः शिवतोऽपि चासौ
भूपान् कृपालुरिह तां प्रकटीकरिष्यन् ।
दुर्बोधसारकलिता न हि खेष्टसिद्धौ
चित्रं न तत्र हरिरेष नृपालवेषः ॥
नृपालेनादिष्टो दिनकरगुरूच्छिष्टभजनः
प्रभोर्माहिष्मत्याख्यरसनखश्रीतांशुकिरणैः ।
गताघाताज्ञानव्रततिमिरग्रन्थार्थरचनः
कथं वा नो कुर्यादियमपि जनो ग्रन्थममलम् ॥
शिवताण्डवयन्त्राणां ग्रन्थार्थादर्शतां गतः ।
मन्त्रादर्शो मम ग्रन्थः स रञ्जयतु पण्डितान् ॥
शिवताण्डवटीकेयं स्वल्पाल्पापि सुधीवराम् ।
व्याख्येयार्थगुणौघैः सर्व्वार्थाकर्षिणी भवति ॥

अथ जगदेव स्वस्वपूर्व्वपूर्व्वजन्मसञ्चितदुरदृष्टसामर्थ्यनियमितदारिद्र्यादिनानाविधदुःखपङ्कनिमग्नमुद्दिधीर्षुः परमकारुणिको भगवान् सदाशिवः संहितोड्डामरयामलादिनानातन्त्रेषु मन्त्रदीपमन्त्रादीपजपहोमाद्य+ + +दिरूपं अमितमुपायमुदाजहार । तस्य चासमर्थानधिकारादिना न सर्व्वविषयत्वं भवतीत्यपरितुष्टो अल्पक्लेशतो धारणमात्रादेव समीहितपरम्परामव्यभिचाराद्दासयन्तीमद्भुतयन्त्रावलिमाविर्भावयितुं नेदमजिज्ञासवे नापि स्वप्रियभावमदधते नापि स्वामभक्तायोपदेश्यमिति सूचयितुं शिवताण्डवाख्ये तन्त्रे विशेष्ये देवीप्रश्नं प्रश्नत्वेन स्वीकृत्य तदुत्तरकथनव्याजेन पूर्व्वं वक्ष्यमाणयन्त्रोपयोगिपदार्थमार्थमाह दक्षिणामूर्त्तिरुवाचेत्यादिना ।

5A, नन्वेवं तन्त्रोक्तवेदविरुद्धमार्गस्यापि प्रामाण्यं प्रसज्येतेति चेत् प्रसज्यतां, का नो हानिः। "अथ मदिरां पिबेत्" "प्रपश्येन्मदनावासं परस्त्रीणां विशेषतः" "कोटिभगदर्शनान्मुक्ति" रित्यादितान्त्रिकार्थानुष्ठानार्थं शिष्टानामपि प्रवृत्त्यापत्तिरिति चेत् सत्यं। "श्येनेनाभिचरन् यजेत" इत्यादि वेदविहित-श्येनादियागे न कुलत्तेषां प्रवृत्तिः। अथ वेदविहितत्वमात्रं न शिष्टकर्तृकानुष्ठान-विषयत्वे तन्त्रं किन्तु वेदाप्रतिषिद्धत्वविशिष्टं तत्। भवति ह्येदं विहितमपि न हिंस्यात् सर्व्वा भूतानि इत्यादिविधिना प्रतिषिद्धमिति चेत्। एवं तर्हि "ब्राह्मणो मदिरां पीत्वा ब्राह्मण्यादेव हीयते" इत्यादितान्त्रिककर्मार्त्तादिवचनैस्तस्य प्रतिषिद्धतया कथं तत्र ते प्रवर्त्तेरन्। अथ पानादिप्रशंसावचनानां का गतिरिति चेत् या गतिः श्येनादियागवचनानाम्। अथ प्ररोचनाभिः तत्तदधिकारिणां तत्र तत्र प्रवर्त्तनेन तत्तत्काम्यार्थाधिगमन एव तेषां तात्पर्य्यं न तु परमपुरुषार्थ-प्रत्यूहपापापूर्व्वपरिहारेपीति चेत् इहापि निधीयतां सैव दृष्टिः। किं च निषेधवचनानां लभ्यते विगतिरेव न हि तेषां निन्दाकरणेन ततो निवृत्तिः फलं ततो निवृत्तेस्तवानभिप्रेतत्वात्। अथ तत्तदैहिककाम्यफलसाधनार्थमेव तत्र प्रवृत्तिरिष्यते। तत्र कामनानुरागात् प्रवृत्तस्य पारलौकिकमनिष्टं नरकादिरूपं भविष्यतीति चेत् एवं तर्हि सिद्धं नः समीहितम्। न ह्येतावतापि ब्राह्मणादि-निषिद्धार्थबोधकभावस्याप्रामाण्यं श्येनादेरनुष्ठानेऽपि न हि तद्भागस्याप्रामाण्यं कश्चिदप्याचष्टे। ... ... ... ... ... ... ...

The conclusion drawn is :—

6B, मन्यते तु वेदाविरुद्धभागस्य प्रामाणिकतया तद्व्यावृत्त्यर्थं विशेषण-मावश्यकमिति संक्षेपः। अत्र नीलकण्ठाः। ... ... ... ... ... ... इत्यादि श्रुतिमूलकत्वमेव षट्त्रिंशदर्थकयन्त्रागाम्। अयं ह्येतस्याः श्रुतेरर्थः।

*Colophon* :—

79A, इति सर्व्वतन्त्रोत्तमे दक्षिणामूर्त्तिपार्व्वतीसम्वादे पूर्व्वखण्डे द्वादशपटलः सम्पूर्णः।

## 5972.

### 5621A. मुण्डमालातन्त्रम् । *Muṇḍamālātantra.*

Substance, palm-leaf. 14 × 1¼ inches. Folia, 27. Lines, 4-5 on a page. Extent in ślokas, 550. Character, Uḍiya. Appearance, good. Complete.

The present MS runs up to the end of the 15th chapter. L. I. 469, II. 740 have only six chapters each. VSP (p. 44) notices a MS of the work in 11 chapters.

The beginning of the work does not agree with that of L. I. 469 and L. II. 740, the first few lines of the last of which agree with those of the *Kālyūrddhvāmnāyatantra* (No. 5963 above). The work deals with Śakti worship in general and the worship of the ten *Mahāvidyās* in particular.

*Beginnings of the different chapters* :—

श्रीइष्टदेवतायै नमः ।

मेरुपृष्ठे समासीनं देवदेवं जगद्गुरुम् ।
शङ्करं परिपप्रच्छ पार्व्वती परमेश्वरम् ॥

श्रीपार्व्वत्युवाच ।

सर्व्वानन्दमयीं नत्वा सर्व्वाम्नायनमस्कृताम् ।
सर्व्वसिद्धिप्रदां देवीं नमामि परमेश्वरीम् ॥
प्रसीद गुह्यवक्तान्ते कथयस्व प्रियम्वद ।
सर्व्वतन्त्रेषु मन्त्रेषु गुह्यं मत् पञ्चवक्त्रकम् ॥
तत्प्रकाशय गुह्याख्यं यद्यहं तव वल्लभा ।

श्रीशिव उवाच ।

कथान्ते कथयिष्यामि गुह्यं मत्पञ्चमात्मकम् ।
स्त्रीस्वभावान्महाभागे न जानामि सुखप्रदम् ॥

देव्युवाच ।

स्वस्थिराहं भविष्यामि न वक्तव्यं कदाचन ।
तव वक्त्रा भविष्यन्ति भावनामन्त्रसिद्धयः ॥

श्रीशिव उवाच।

देवतागुरुमन्त्राणां भावनामेवमुच्यते।
मन्त्रो यो गुरुरेवासौ यो गुरुः सा च देवता॥
काली तारा महाविद्या षोडशी भुवनेश्वरी।
भैरवी छिन्नमस्ता च रमा धूमावती परा॥
वगला सिद्धविद्या च मातङ्गी कमलात्मिका।
एता दश महाविद्याः सर्व्वतन्त्रेषु कीर्त्तिताः॥
अयन्तु दुर्लभो लोके षडाम्नायनमस्कृतः।
एताभ्यः परमा भक्त्या त्रिषु लोकेषु दुर्लभा॥
सुखमोक्षप्रदा नित्या क्लेशसाधन कुत्रचित्।
येन येन प्रकारेण सिद्धिं यास्यति भूतले।
सर्व्वान्ते कथयिष्यामि प्रेमभावेन केवलम्॥
नात्र सिद्धाद्यपेक्षादि न च ऋक्षविचारणा।
कालादिशोधनं नास्ति न च मित्रारिदूषणम्॥
सिद्धिं विद्या महाविद्या युगसेवापरिश्रमः।
नात्र कश्चिन्महादेवि दुःखसाध्यं न किञ्चन॥
या काली परमा विद्या सा तारा परिकीर्त्तिता।
या तारा परमा विद्या सैव काली प्रकीर्त्तिता॥
एतयोर्भिन्नभावेन मन्त्राः सिद्धा भवन्ति न।
उक्तान्तु कालिकातन्त्रे ताराकल्पे च तन्मया॥
षोडशी वा महाविद्या चतुर्था कथिता पुरा।
लक्ष्मीबीजादिभावेन पञ्चमी सा भवेदिह॥
एकाक्षरीबीजहीना महाविद्या भवेत् पुरा।
भुवने श्वरी पातु महाविद्या प्रकीर्त्तिता॥

देव्युवाच।

त्वया विद्या च देवेश कथिता न प्रकाशिता।
इदानीं कथयिष्यामि कथयानन्दसुन्दर॥

ईश्वर उवाच ।

भुवनेशा महाविद्या देवराजेन वै पुरा ।
आराधिता च विद्येयं ब्रह्मणानेन मोहिता ॥
एकाक्षरी बीजहीना वाग्भवेनोज्ज्वला परा ।
कामराजाख्यविद्या सा सुसिद्धा पुष्पधन्विका ॥
शक्रेण पूजिता पूर्व्वं भुवनेशी प्रतिष्ठिता ।
कुमारी या च नार्य्येयं त्वया शुभा रतिश्रुता ॥
केवलं शिवभावेन शक्तिरूपेण केवलम् ।
माया प्रतिष्ठिता देवी ताराचन्द्रस्वरूपिणी ॥
भैरवी तु महाविद्या महासम्पत्करी शुभा ।
छिन्नमस्ता सुरामांसप्रिया रक्तस्वरूपिणी ॥
धूमावती महाविद्या मारणोच्चाटने मता ।
बगला वश्यस्तम्भादि नानागुणसमन्विता ॥
मातङ्गी तु महाविद्या त्रैलोक्यवशकारिणी ।
कमला त्रिविधा प्रोक्ता एकाक्षरतया स्थिता ॥
एकाक्षरी महाविद्या सर्व्वसम्पत्प्रदायिनी ।

Chapter II (Fol. 2A):—

श्रीदेव्युवाच ।

अक्षमालेति कथिता यत्नेनैव प्रकाशिता ।
अक्षमालेति किं नाम फलं किं वा वदस्व मे ॥
अक्षमाला तु देवेशि काम्ये नैमित्तिके तथा ।
भवत्यचापि पुष्पेऽपि विस्तरात् कथ्यते मया ॥

Chapter III (Fol. 4A):—

देव्युवाच ।

ध्यानासनं देवदेव कथयानन्दहेतवे ।
मदाश्रया विनिर्दिष्टाः सर्व्वे मन्त्राः सुसिद्धिदाः ॥

ईश्वर उवाच ।

नदीतीरे विल्वमूले श्मशाने शून्यवेश्मनि ।
महालिङ्गे पर्व्वते वा देवागारे चतुष्पथे ॥
शवस्योपरि मुण्डे वा जलकण्टकपूरके ।
संग्रामभूमौ वा योनौ वा श्मशाने विजने वने ॥

Chapter IV (Fol. 5A) :—

देव्युवाच ।

केवलं बलिदानेन तुष्टा भवति चण्डिका ।
कथितं पूर्व्वमखिलं प्रकाशं कुरु शङ्कर ॥

ईश्वर उवाच ।

अत्यन्तगुह्यं देवेशि विधानं बलिपूजनम् ।
कथयामि वरारोहे स्वस्वभावेन सुन्दरि ॥
दधिक्षीरं गुडं चान्नं पायसं शर्करान्वितम् ।
पायसं क्षीरमम्लं नारिकेलफलोदकम् ॥
मद्यञ्च दिव्यं दद्यात् मांसं माहिषमेव च ।
पायसं क्षुद्रमांसञ्च नारिकेलसमोदकम् ॥
शशकं मेषखड्गञ्च मार्द्दकञ्च सशर्करम् ।
रम्भाफलञ्च लड्डुकं भर्ज्जितान्नञ्च पिष्टकम् ॥

... ... ... ... ...

... ... ... ... ...

... ... ... ... ...

छागे दत्ते भवेद्वाग्मी मेषे दत्ते भवेद्ध्रुवम् ।
माहिषे धनवृद्धिः स्यात् मृगे भोगफलं लभेत् ॥
पक्षिदत्ते महर्द्धिः स्यात् गोधिकायां महाफलम् ।
नरे दत्ते महर्द्धिः स्यादष्टसिद्धिरनुत्तमम् ॥

Chapter V (Fol. 6B) :—

देव्युवाच ।

रहस्यातिरहस्यं मे पुरश्चर्य्याविधिं प्रभो ।
वदस्व यदनुष्ठानं सर्व्वकामा भवन्ति हि ॥

ईश्वर उवाच ।

गृहीत्वा सद्गुरोर्दीक्षां शुभे काले दिवानिशि ।
आश्रमे वैष्णवः प्रोक्तो मध्यमः शैव दीक्षितः ॥
सुरया दीक्षितो यो वै स एव परमो गुरुः ॥

Chapter VI (Fol. 7B) :—

देव्युवाच ।

देवदेव महादेव सृष्टिस्थितिलयात्मक ।
कालिकाया महाविद्या कथयस्व समाहितः ॥

ईश्वर उवाच ।

अथ वक्ष्ये महाविद्यां कालिकाया सुदुर्ल्लभाम् ।
यस्य विज्ञानमन्त्रेण जीवन्मुक्तो भवेन्नरः ॥

Chapter VII (Fol. 10B) :—

देव्युवाच ।

कैलासशिखरारूढं देवदेवं जगद्गुरुम् ।
पृच्छामि श्रृणु देवेश तारिण्या मन्त्रसाधनम् ।

शङ्कर उवाच ।

श्रृणु देवि प्रवक्ष्यामि मन्त्रोद्धारश्च कथ्यते ।
ॐकारं पूर्व्वमुच्चार्य्य हकारं तदनन्तरम् ॥

Chapter VIII (Fol. 13A) :—

देव्युवाच ।

देवदेव परानन्द परिचर्य्याविशारद ।
सुन्दरीमन्त्रसाधन्तु (?) वदस्व करुणानिधे ॥

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि षोडशीमन्त्रसाधनम् ।
येन विज्ञानमात्रेण कुलकोटीः समुद्धरेत् ॥

Chapter IX (Fol. 15A):—

देव्युवाच । (?)

अथ देवि प्रवक्ष्यामि गुह्यां त्रिभुवनेश्वरीम् ।
यामासाद्य सुराः सर्व्वे शक्तिभावेऽभवन् पुरा ॥

Chapter X (Fol. 16B):—

देव्युवाच ।

महेश श्रोतुमिच्छामि भैरवीमन्त्रनिर्णयम् ।
येन विज्ञानमात्रेण कुलकोटीः समुद्धरेत् ॥
वायुबीजञ्च प्रथमं बीजं प्राणसमन्वितम् ।
सकलं भुवनेशानि द्वितीयं बीजमुद्धृतम् ॥

Chapter XI (Fol. 18A):—

देव्युवाच ।

महेश श्रोतुमिच्छामि छिन्नमस्ताविधिर्भवेत् ।
येनानुष्ठितमात्रेण सर्व्वपापैः प्रमुच्यते ॥

Chapter XII (Fol. 21A):—

श्रीमहादेव उवाच ।

अथान्यातु (?) स वक्ष्यामि देवीं गुह्यतमं प्रिये ।
उच्छिष्टपूर्व्वकां देवि मातङ्गीं सर्व्वसिद्धिदाम् ॥
सर्व्वापत्तारिणीं देवि सर्व्वदोषविवर्ज्जिताम् ।
यया विज्ञानमात्रेण क्षयं गच्छन्ति चापदः ॥

Chapter XIII (Fol. 23A):—

श्रीदेव्युवाच ।

महेश श्रोतुमिच्छामि बगलाविधिमुत्तमम् ।
येन विज्ञानमात्रेण नासाध्यं भुवनत्रये ॥

ईश्वर उवाच ।

प्रश्नु देवि प्रवक्ष्यामि वगलामन्त्रनिर्णयम् ।
वह्निद्दौनेन्द्रसद्मयो वगलामुखी सर्व्वयुक् ॥

Chapter XIV (Fol. 24B) :—

देव्युवाच ।

कैलासशिखरारूढ देवदेव जगद्गुरो ।
रमामन्त्रस्य किं + + तद्वद करुणानिधे ॥

ईश्वर उवाच ।

प्रश्नु देवि प्रवक्ष्यामि कमलामन्त्रनिर्णयम् ।
येन विज्ञानमात्रेण नासाध्यं भुवनत्रये ॥

Chapter XV (Fol. 26A) :—

श्रीदेव्युवाच ।

कमलाया मनुवृन्दं कथयस्व महाप्रभो ।
केनोपायेन देवेश कमला वरदा भवेत् ॥

ईश्वर उवाच ।

कुलेशि श्रोतुमिच्छामि (?) कमलामन्त्रमुत्तमम् ।
येन विज्ञानमात्रेण महादारिद्र्यखण्डनम् ॥

## 5973.

### 3917F. *Muṇḍamālātantra.*

Substance, country-made paper. 14¼ × 4¼ inches. Folia, 14 (beginning from 41A and ending in 54B). Lines, 11 on a page. In tripāṭha form. Character, Bengali. Date, Śaka, 1614. Writing effaced. Appearance, old and dilapidated. Complete in 12 chapters.

The present MS contains paṭalas I to XII of which the first five chapters agree with those of the previous MS.

*Post Colophon Statement :—*

शुभमस्तु शकाब्दाः १६१४ ।

## 5974.

### 179. *Muṇḍamālātantra.*

Substance, country-made paper. 14 × 3 inches. Folia, 1–13. Lines, 5-6 on a page. Extent in ślokas, 198. Character, Bengali. Appearance, old. Incomplete.

This MS which runs up to the end of the sixth chapter has been described in L. I. 469.

## 5975.

### 10724. ज्ञानतिलकम् । *Jñānatilaka.*

Substance, palm leaf. 11 × 2¼ inches. Folia, 11–24. Lines, 4 on a page. Character, Kuṭila. Appearance, discoloured. Incomplete.

A MS of a *Jñānatilaka*, in the form of an interlocution between Nārada and Viṣṇu, is described in Nep. Vol. I, p. 180. The present work which is in the form of an interlocution between Śiva and his son Kārttikeya is apparently different and it deals with supreme knowledge.

The MS contains chapters V–VIII and a portion of chapter IV. The colophon of the 7th chapter (Fol. 19A) calls the work *Kālajñānatilaka.* Beginnings of the different chapters are as follows :—

Chapter V (Fol. 12A) :—

श्रीकार्त्तिकेय वाच

त्वमीश सर्व्वं ईशानः सर्व्वञ्च शिवशाश्वतः ।
एभिर्व्वोक्तिभिर्देव किं भ्रामयसि शङ्कर(ः) ॥
मूढो[ऽ]हं अल्पबुद्धिश्च संसारभयपीडितः ।
स्पष्टं कथय देवेश समूलमभिप्रोक्तकैः ॥

12B, श्रीईश्वर उवाच ।

त्वां मुक्त्वा नास्ति मे कश्चित् इष्टो पार्व्वतिनन्दन ।
यस्माहं कथयिष्यामि एतत् परमकारणम् ॥

... ... ... ... ...

13A, अभावभावना येषां अभावन्तत्त्वनिश्चयात् ।
अभावगतचैतन्यास्ते मुक्ता नात्र संशयः ॥
अभावलक्ष्यसंघातं येगृहीतं नरेश्वरैः ।
दुस्तरं तेपि निस्तीर्णा महामाया भवार्णवे ॥
तीव्रेणापि न दह्येत घोरसंसारवह्निना ।
ये प्रविष्टा महात्मानो अभावविमलाम्भसि ॥
क्रोधदंष्ट्रो दुराधर्ष माया-कुटिलविग्रहः ।
अभावभाविनां पुंसां किं करोति भवोरगः ॥
लोभजिह्वा महामाया संसारजनगोचरः ।
शून्यसंघरतानां तु नराणां स पराङ्मुखः ॥

Chapter VI (Fol. 15B) :—

15B, श्रीकार्त्ति + + + + ।

+ वाधिदेव ईशान सर्व्वेश सुरपूजित(:) ।
प्रत्यक्षं दर्शयं देव यत्र वक्तोसि शंकर ॥

श्रीशङ्कर उ + + ।

+ + पश्य महासेन अनन्तं सर्व्वतोमुखं ।
महाज्ञानार्णवं शान्तं यं ज्ञात्वा वत्स मुच्यते ॥

Chapter VII (Fol. 17A) :—

[कार्त्तिके]य उवाच ।

तत्प्रसादाच्च देवेश अज्ञानतिमिरं घनं ।
ज्ञानसूत्र-समायोगात् विस्तीर्णं मन तत्क्षणात् ॥
+ + + + य नामानि अनामस्य सुरेश्वर ।
शिवस्य सूक्ष्मरूपस्य येन मे निश्चयो भवेत् ॥

श्रीईश्वर उ[वाच] ।

+ग्रामं च्यादिरहितं सम्मिखं यस्य मध्यतः ।
नामस्य पञ्चतं नित्यं वाद्यं ते परकारणं ॥
नमस्तृतीययुग्मे+ +मनामयमक्षरं ।
तेन विज्ञातमात्रेण मुक्तस्त्वं भवबंधनात् ॥
शिरद्वितीयकं पंचयुग्मोर्द्धशिरसं शिवं ।
ईश्वरालंकृतं मूर्द्धि तं ज्ञात्वा निर्हृतो भव ॥
संहारबिंदुसंयुक्ता वह्निरौकारस+ + + ।
अग्निस्थानं च शुद्धं च दुःखपंचकलक्षणा ॥

Chapter VIII (Fol. 19A) :—

श्रीकार्त्तिकेय उवाच ।

गङ्गातरङ्गनिर्धूतजटाजूट शशाङ्कधृक् ।
स्मरारेर्देव ईशान वृषभाङ्कित चासन ॥
... ... ... ... ...

श्रीईश्वर उवाच ।

... ... ... ... ...

19B, तथापि दुःखसाध्यस्य सारात्सारतरं महत् ।
समाधिनिर्णयं सूक्ष्मं भूयोपि कथयामि ते ॥
यदेतदात्मनो पिण्डं शून्यावस्थं विचिन्तयेत् ।
हते चैव स्वके पिण्डे सर्व्वंशून्यमिदं जगत् ॥
अहं विष्णु चिरं वत्स भूतानि च जगत्त्रयं ।
विग्रहा समवायेन मनोध्वनि नियोजयेत् ॥
सर्व्वं समरसीकृत्य बुद्धा परमकारणे ।
मनो निश्चलचित्तेषु न किञ्चिदपि चिन्तयेत् ॥

## 5976.

### 9991. *Jñānatilaka.*

Substance, palm-leaf. 11 × 2¼ inches. Folia, 3 (marked 2, 9, 10). Lines, 4 on a page. Extent in ślokas, 30. Character, Kuṭila. Appearance, old. Incomplete.

This is a mere fragment. Fol. 9B contains the colophon of the third chapter.

## 5977.

### 2890. मृत्युञ्जयतन्त्रम् । *Mṛtyuñjayatantra.*

Substance, country-made paper. 13 × 4¼ inches. Folia, 16. Lines, 5 on a page. Extent in ślokas, 300. Character, Bengali. Appearance, fresh. Incomplete.

This MS, which contains chapters I–IV and a portion of chapter V, has been described in L. X. 4204.

A *Mahāvidyāsahasranāmastotra* mentioned in a MS in VSP (p. 44) as part of this Tantra is not found in the present MS.

## 5978.

### 187. पुरश्चरणरसोल्लासतन्त्रम् । *Puraścaraṇarasollāsatantram.*

Substance, country-made paper. 11½ × 4 inches. Folia, 32. Lines, 7 on a page. Extent in ślokas, 488. Character, Bengali. Appearance, old. Complete in ten chapters.

This MS has been described in L. I. 457. The work is also described in CS. V. 48. Besides with *Puraścaraṇa* proper, which is a well-known Tāntrika rite, the work deals with other topics as well, e.g. initiation (*dīkṣā*), greatness of the ten mahāvidyās, etc. The present MS contains chapters I–X. The greatness of the yavanas and the

success to be obtained by them by the performance of Tantra rites are referred to on Fol. 8B as follows :—

सूर्य्यग्रहणकालाद्धि नान्यः कालः प्रशस्यते ।
स कालः परमेशानि परं ब्रह्म स्वमूर्त्तिमान् ॥
प्रजपेद् यदि चार्व्वङ्गि यवना यवनोद्भवाः ।
विचार्य्य यदि देवेशि यवनः प्रजपेद् यदि ॥
तत्काले चञ्चलापाङ्गि सिध्यन्ति यवनास्ततः ।
ग्रहणे चन्द्रसूर्य्यस्य न जपेद् यदि पामरः ॥
पूर्व्वपुण्यं परित्यज्य विष्ठायां जायते क्रिमिः ।
तस्मात् यत्नेन देवेशि कर्त्तव्यो ग्रहणे जपः ॥
न तिथिर्नामगोत्रञ्च न च सङ्कल्पमाचरेत् ।
कलिकाले महेशानि यवनो बलवांस्ततः ॥
मत्स्यमांसरताः सर्व्वे य[व]ना मद्यसेविताः ।
अतएव महेशानि य[व]नाः सिध्यते कलौ ॥

## 5979.

### 2783. *Puraścaraṇarasollāsatantra.*

Substance, country-made paper. 17 × 5½ inches. Folia, 16. Lines, 10 on a page. Extent in ślokas, 400. Character, Bengali. Appearance, fresh. Complete in ten chapters.

Same as above.

## 5980.

### 2894. *Puraścaraṇarasollāsatantra.*

Substance, country-made yellow paper. 17½ × 4½ inches. Folia, 23. Lines, 5 on a page. Extent in ślokas, 400. Character, Bengali. Date, B.S. 1276. Appearance, fresh. Complete in eight chapters.

The present MS runs up to the end of the 8th Paṭala.

*Post Colophon :—*

श्रीहरिहरशर्म्मणां श्रीश्रीदुर्गाशरणाम् । सन १२७६ साल
२३ वैशाख मङ्गलवार ।

## 5981.

### 2900. फेत्कारिणीतन्त्रम् । *Phetkāriṇītantra.*

Substance, country-made yellow paper. 17 × 4 inches. Folia, 40. Lines, 6 on a page. Character, modern Bengali. Extent in ślokas, 1,000. Appearance, fresh. Incomplete at the end.

The work which deals with the black rites of Tantra like *māraṇa*, *uccāṭana*, etc., has been published in 20 chapters in the *Tantrasaṅgraha* and *Sulabhatantraprakāśa*. VSP (p. 39) notices a MS of the work which has 22 chapters.

Chapters are not indicated by numbers in the present MS. It generally agrees with the printed editions up to Fol. 34A where the 13th chapter of the printed editions almost reaches its end.

## 5982.

### 8476. परानन्दमतम् । *Parānandamata.*

Substance, country-made paper. 7½ × 3½ inches. Folia, 1–18 of which Fol. 5, 9, 11, 13, 15, 16 are missing. Lines, 6 on a page. Extent in ślokas, 70. Character, modern Nāgara. Appearance, fresh. Complete.

The work deals with the views of the Parānanda School of the Tantras.

*Beginning* :—

श्रीः त्रिनेत्रं भैरवं शक्तिं विष्णुं सूर्य्यं महेश्वरम् ।
भक्तेषु वात्सल्ययुतान् नमाम्येतान् पुनः पुनः ॥
आचार्य्यं परमानन्दं नमामि च जगद्गुरुम् ।
त्रिविधतापप्रहर्त्तारं दातारं सर्व्वसम्पदां ॥
देवानन्दं च तच्छिष्यं नित्यानन्दं तु भ्रातरं ।
सिद्धांश्च द्युत्तमाचारान् उत्तराचारदीक्षितान् ॥

नारदादीनगस्त्यादीन् वामाचारस्थितान् मुनीन् ।
वशिष्ठादीन् मुनिवरान् दक्षिणाचारदीक्षितान् ॥
नमामि परमान[न्द]मतस्थान् ऋषिपुंगवान् ।
मतानि च बहून्यत्र तामसादिप्रभेदतः ॥
वेदाप्रामाण्यवादीनि तन्मतस्था नराः क्वचित् ।
तमोमुख्यानि तेष्वेव नास्तिकानां मतानि च ॥
कुर्व्वंतश्चैव धर्म्मं स्वं यथोक्तं मतभावितं ।
क्वचिज्जन्मनि ते यान्ति वेदप्रामाण्यवादिषु ॥
जैमिन्याद्यास्तिकानां च राजसेषु मतेषु च ।
तत्रापि पुण्यपुञ्जानां सम्याद्यादीन् प्रयत्नतः ॥
परानन्दमते चास्मिन् सर्व्वोत्कृष्टोत्तमे शुभे ।

इति उपोद्घातप्रकरणम् ॥

परानन्दमतं वक्ष्ये त्रैलोक्येपि सुदुर्लभं ।
परमात्मा चेश्वरश्चेति जीवश्चेति पृथक् पृथक् ॥ १ ॥
नित्यानन्दः सुरूपी च दिव्यश्चेश्वरभावितः ।
ईश्वराणां स्वभक्तानां निग्रहानुग्रहक्षमः ॥ २ ॥

इति परात्मवर्णनम् ।

तस्य लोको महान् दिव्यः परमानन्दसंज्ञकः ।
यत्र गत्वा न यात्यत्र पुनः संसारमण्डले ॥ ३ ॥
मुक्ताश्च चेश्वरा यत्र रमन्ते च यथासुखं ।
यत्र ध्यानासक्तचित्ता स्वनिर्दिष्टक्रिया युताः ॥ ४ ॥

इति परमानन्दलोकवर्णनम् ॥

ज्ञानवान् पुरुषोयं कर्त्ता सकलकर्म्मणां ।
मनसा च समायुक्तः तत्तदिन्द्रियसौख्यधृक् ॥ ५ ॥
पापं कुर्व्वन् नरकगः पुण्यं कुर्व्वन् हि स्वर्गगः ।
कुर्व्वन्नुपासनामैग्रीं तत्तदीशस्य लोकगः ॥ ६ ॥
एतेन लक्षणेनैव युक्तजीवाद्यसंख्यकाः ।

इति जीवलक्षणम् ॥

परानन्दैकदेशस्तु स्वानन्दश्चेत्युदाहृतः ॥ ८ ॥
कृतपापान् दुराचारान् कृतपुण्यांस्तथैव च ।
आगते प्रलये ह्येतान् सानन्दे स्थापयत्यसौ ॥ ९ ॥
वैष्णवा विष्णुना सार्द्धं गच्छन्ति परमं पदम् ।
स्वेन स्वेनेष्टदेवेन गच्छन्ति परमं पदम् ॥ १० ॥
परमात्मा कदाचित् स ब्रह्माण्डमसृजत् प्रभुः ।
कृतायुताच्च मेध्यं तु जीवसानन्दसंस्थितं ॥ ११ ॥
सर्गस्य कारिणं देवं ब्रह्माणमकरोत् परः ।
पुण्यभावो यथा यस्य तथा तस्मै ददौ ततः ॥ १२ ॥
विष्णुत्वं वा शिवत्वं वा परात्मा भक्तभावितः ।
जगत्यस्मिन् शून्यमये ह्यागता ईश्वरास्तु ये ॥ १३ ॥
ध्यायन्तस्ते परवपुः जपन्तः परमं मनुं ।
नीत्वा तु कतिचित् कालान् ब्रह्मा ब्राह्ममवासृजत् ॥ १४ ॥
लोकं दुष्टैस्तु दुष्प्रेक्ष्यं तपसा दिव्यमुत्तमम् ।
चतुर्णवकनवकं लोकमेवं ईशास्तपोऽन्विताः ॥
तत्र स्थित्वा ब्रह्मदेवस्त्रीन् लोकानसृजत् प्रभुः ॥ १५ ॥
आकाशाद्वायुमसृजत् वायोरग्निं चकार सः ।
चकारैवं त्रिलोकीं तां पुण्यपापोचितां दृढां ॥ १६ ॥
तस्यां प्रवेशयामास जीवान् सानन्दसंस्थितान् ।
पापान् जीवांस्तु ब्रह्मास्थक्तिर्यग्योन्यामपातयत् ॥ १७ ॥
राजसान् मानुषे ब्रह्मा सात्त्वान् दैवे ह्यपातयत् ।
सृष्टेषु त्रिषु लोकेषु पञ्चतत्त्वात्मकेषु च ॥ १८ ॥
शक्रादिभ्यो हि देवेभ्यः ह्यधिकारान् ददौ प्रभुः ।
विष्णुस्तु पालयामास चोज्जहार तथा शिवः ॥ १९ ॥

Some of the characteristics of the school will be noticed in the extracts quoted below :—

5A, तदोत्पुक्ते वशिष्ठाद्याः कुरु शिष्यान् कृपानिधे ।
आचार्य्यः परमानन्दस्तदोवाच महामुनीन् ॥

इयानेव विशेषोक्ति मन्मते मुनिसत्तमाः ।
न न्यासो न च हिंसास्ति जङ्गमस्य जडस्य वा ॥
तदोचुर्मुनयः सर्व्वे यच्चे हिंसाः श्रुताः शिव ।

शिव उवाच ।

अतएव मया प्रोक्तं मन्मते नास्त्यदो द्वयं ।
भाषणं त्रिविधं लोके युक्तं योज्यं च योजितं ॥
यदुक्तं गुरुणा वाक्यं सत्यमित्यवधारयेत् ।
न तत्र तर्कः कर्त्तव्यो न युक्तिर्नाप नोचितिः ॥
यद् यद् ब्रूयाद् गुरुः साक्षात्तत्तत्कुर्य्यादसंशयी ।
इदं तु भाषणं युक्तं द्वितीयं परिकथ्यते ॥
अन्यर्थकं तु योज्यं स्याद्योजितं विजिगीषवः ।
कुर्व्वन्ति भाषणं विप्रा वादिनो वादतत्पराः ॥
न युष्माभिर्मया योज्यं योजितं नापि भाष्यते ।
मया युक्तं भाषणं तु क्रियते सर्व्वदैव हि ॥
श्रोतव्यं चेत् प्रष्टव्यं भो नो चेद् गच्छत मा चिरं ।
इत्युक्ता मुनयः सर्व्वे ववन्दुः पादपङ्कजम् ॥

10B, परानन्दमतप्राप्तिर्यावन्नैवोपजायते ।
तावन्न्यासो यज्ञविधौ जंगमस्य च हिंसनं ॥
परानन्दमते प्राप्ते न [च] कुर्य्यात्त्विदं द्वयं ।
श्रुत्यन्तवर्त्तिनामेव ह्यधिकारो मते मम ॥

*End :—*

वानप्रस्थोपद्रवकर्त्तॄन् वन्यान् हिंस्रान् जन्तून् व्याघ्रादीन् हन्यादेव राजा। तानेव हिंस्रान् काल्यग्रे वलिदानविधिना छित्त्वा वलिं समर्पयेत् काल्यै वा। ... ... ... इत्युक्तो वसिष्ठसुदर्शनाभ्यां पूजितोऽन्तर्दधे शिव इति।

... ... ... ... ...

परानन्दमतस्यास्य यः पठेत् सुसमाहितः ।

तत्त्वं तु समतं ज्ञात्वा खेटलोकं व्रजेत्सुधीः ॥
अनेन प्रीयतां देवी महाकाली सुरार्चिता ।

There is no division into chapters in this MS.

## 5983.

### 3387. भूतशुद्धितन्त्रम् । *Bhūtaśuddhitantram.*

Substance, country-made paper. 19½ × 4½ inches. Folia, 19. Lines, 8 on a page. Extent in ślokas, 750. Character, modern Bengali. Appearance, fresh. Complete.

This and the following MS have 17 chapters each. VSP (p. 43) notices a MS of this work which has 13 chapters.

*Beginning :—*

ॐ नमः कालिकायै ।

श्रीदेव्युवाच ।

देवदेव महादेव साम्प्रतं कथय प्रभो ।
भूतशुद्धिं देहशुद्धिं प्राणायामं ततः परम् ॥
क्रमेण कथ्यतां देव शूलपाणे पिनाकधृक् ।
मन्त्रं तन्त्रं महादेव येन शुध्यति भूतले ॥

ईश्वर उवाच ।

कथयामि वरारोहे खञ्जनाक्षि शुचिस्मिते ।
तत्त्वत्रयं प्रवक्ष्यामि गुह्याद् गुह्यतमं महत् ॥

*End :—*

सर्व्वत्र विविधा मुक्तिः काश्यां निर्व्वाणमुत्तमम् ।
यदि भाग्यवशात्तत्र म्रियन्ते येऽत्र जन्तुभिः ।
पाप-पुण्यं परित्यज्य शिवतां प्राप्यते क्षणात् ॥

*Colophon :—*

इति श्रीभूतशुद्धितन्त्रे हरपार्व्वतीसम्वादे सप्तदशः पटलः ।

## 5984.

### 4611. *Bhūtaśuddhitantram.*

Substance, country-made paper. 19 × 4 inches. Folia, 1–28. Lines, 8 on a page. Extent in ślokas, 700. Character, Bengali. Appearance, fresh. Incomplete.

The present MS runs up to the end of the 16th Paṭala, which is followed by the beginning of the 17th Paṭala devoted to the praise of the work.

## 5985.

### 3188. मायातन्त्रम् । *Māyātantram.*

Substance, country-made yellow paper. 14 × 5¼ inches. Folia, 12. Lines, 12, 13 on a page. Extent in ślokas, 432. Character, Bengali. Date, B.S. 1287. Appearance, fresh. Complete in 12 chapters.

The present MS contains chapters I–XII. The manuscript of the work described in L. I. 214 runs up to the 7th chapter. HPR. I. 285, which also bears the same name, appears to be a quite different work.

*Beginning :—*

श्रीश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि तत्त्वमन्यद् यथा पुरा ।
तोये व्याप्ते तु सर्व्वत्र स्वर्गे मर्त्त्ये रसातले ॥
विश्वे चैकार्णवीभूते न सुरासुरमानवाः ।
नैव क्षितिर्न वा किञ्चित्तोयमात्रावशेषतः ॥
तदा विश्वम्भराद्देवात् सिसृक्षा मम जायते ।
ध्यात्वा स्वर्गादिसम्भवे मायां सस्मार च प्रभुः ॥
तदा वटदलं भूत्वा तोयान्तं समवस्थितम् ।
ततो नारायणं देवं (स चै धरे) सा दधार स्वलीलया ॥

विचचार तदा लोके स्वेच्छाचारः स्वयम्प्रभुः ।
विचरन्तं वटदले लोकेषु परमेश्वरम् ॥
वटवृक्षस्थितस्तत्र मार्कण्डेयो महामुनिः ।
ददर्श परमेशानं शिवमव्यक्तरूपिणम् ॥
तुष्टाव स तदा हृष्टो मुनिः परमकारणम् ।
नमस्ते सर्व्वदेवेश ... ... ... ...
... ... ... ... ...
इति स्तुत्वा मुनिस्तत्र विरराम सुसंयतः ।
कृताञ्जलिपुटो भूत्वा दण्डवत् प्रपपात च ॥
तत उत्थाय देवेशं नाभिपद्मसमुद्भवम् ।
चतुर्वर्गं चतुर्वक्त्रं ददर्श परमं शिवम् ॥
सृष्टौ नियोजयामास तं ब्रह्माणं सुरेश्वरम् ।
ध्यात्वा ब्रह्मा तदा तत्र सप्तर्षीन् परमेश्वरि ॥
जनयामास मनसा मानसास्ते ततः शिवे ।
विना शक्तिं न शक्तास्ते सृष्टिं कर्त्तुं महेश्वराः ॥
योनौ सृष्टिरतो ज्ञेया ततो योनिमकल्पयत् ।
ततः कश्यपनामानं मुनिं पुनरजीजनत् ॥
पुनः सृष्टौ च तं पुत्रं ब्रह्मा प्रोवाच यत्नतः ।
जनयामास ततः कन्यां रूपयौवनमन्वितां ॥
नियोज्य मुनये तां तु ब्रह्मा प्रोवाच सृष्टये ।
नानायोन्याकृतिस्तास्तु समस्ता जीवजातयः ॥
उत्पादयामास तदा प्रजापतिरखण्डितः ।
ततो नारायणो देवस्तुष्टो मायामुवाच सः ॥
वटपत्रस्वरूपा त्वं यतो मां विधृताऽसि ।
अतो धर्म्म-स्वरूपासि जगत्यस्मिन् सनातनि ॥
आराधयिष्यन्ति भुवि मनुजास्त्वां सनातनीं ।
सर्व्वकामेप्सवो लोके मायाधर्म्मस्वरूपिणीम् ॥

मन्त्रमाराधने चास्याः प्रवक्ष्यामि शृणु प्रिये ।
नादेन्दुसंयुतं दान्तं धर्म्माय कुरु तत्परम् ॥
षडक्षरो महामन्त्रो धर्म्मस्याराधने मतः ।
यं कामं समनुद्दिश्य पूजयिष्यन्ति मानवाः ॥
अचिरादेव लप्स्यन्ति सर्व्वकामं न संशयः ।

So it proceeds to give the different mantras and different modes of worship of Māyā on particular occasions.

8A, ऋत्वीमृतुमतीं वीक्ष्य सहस्रं यदि नित्यशः ।
जपेदेकाग्रमनसा कुलपूजारतः सुधीः ॥
आषोडशदिनं यावत् वाक्पतिर्भवति ध्रुवम् ।
मधुपानरतो रात्रौ चन्द्रबिम्बं प्रचुम्ब्य च ॥
पुनः पुनः साधकाग्र्यो भवेत् कविवरः क्षणात् ।
मर्दयन् शिरियुगं देवि तत आलिङ्ग्य यत्नतः ॥
एवमष्टोत्तरशतं कृत्वा धनपतिर्भवेत् ।
कुण्डगोलोद्भवं पुष्पं समादाय प्रयत्नतः ॥
निवेदयेन्महादेव्यै प्रसादं तिलकं चरेत् ।
शताभिमन्त्रितं कृत्वा मोहयेदखिलं जगत् ॥

Curiously enough, it gives mantras to be used by Yavanas as well.

8A, कलिकाले तु देवेशि यवना बलवत्तराः ।
मत्स्यमांसरताः सर्व्वे सर्व्वदा मद्यसेविनः ॥
अनाचाररतास्तेन सिध्यन्ति यवनाः कलौ ।
यवनानां महेशानि त्र्यक्षरीं ब्रह्मरूपिणीं ॥
निगदामि वरारोहे सावधानावधारय ।
कलावतीं समुद्धृत्य रङ्किणीं तदनन्तरम् ॥
रतिबीजन्ततो देवि ततश्च हृदयोगिनीम् ।
एषा तु त्र्यक्षरी विद्या यवनेषु प्रतिष्ठिता ॥

संयुक्तैषा यदा विद्या तदैवैकाक्षरी भवेत् ।
साचारा ब्राह्मणाद्यास्तु सिध्यन्ति बहुकालतः ॥
अनाचाराः प्रणश्यन्ति सत्यमेतन्न संशयः ।
उपायाः ब्राह्मणादीनां तेनोक्ताः शतशो मया ॥
सिध्यन्ति तैर्यथोक्तेन नियमेन यथाविधि ।

*End :—*

12A, इदानीं शृणु देवेशि पूजाधारं विशेषतः ।
जले यन्त्रे शिलायान्तु वि[ल्व](ल्ब)मूले घटोपरि ॥
लिङ्गे योनौ महापीठे शून्यागारे चतुष्पथे ।
कुट्टनीगृहमध्ये च कदलीमण्डपे तथा ॥
पुष्पयुक्ते भगे देवि गणिकागेहमध्यतः ।
महारण्ये प्रान्तरे च शवे च शक्तिसङ्गमे ॥
पञ्चानन्दपरो भूत्वा साधयेत् सकलेप्सितान् ।
यं यं कामयते कामं तं तं प्राप्नोति निश्चितम् ॥
नूनं तद्गृहमागत्य कुवेरो दीयते वसु ।
वातस्तम्भं जलस्तम्भं गतिस्तम्भं विवस्वतः ॥
वह्नेः सत्यं करोत्येवं महामाया प्रसादतः ।
नासाध्यं विद्यते तस्य त्रैलोक्येपि च सुन्दरि ॥
योनिकुण्डे कृते होमे साक्षाद्गङ्गाधरो भवेत् ।
पूजास्थाने कामबीजं लिखित्वा शिवयोजनात् ।
कवचं प्रपठेद्यस्तु शताष्टं सुरेश्वरि ॥
वाग्मी भवति मासेन सत्यं सत्यं न संशयः ।
अचिराल्लभते देवि कवितां सुखशालिनीं ॥
मोदते सर्व्वलोकेषु शिववत् परमेश्वरि ।
इति ते कथितं देवि सर्व्वतन्त्रेषु गोपितम् ॥

*The Last Colophon :—*

इति मायातन्त्रे हरपार्व्वतीसंवादे द्वादशः पटलः ।

*Post Colophon :—*

इति सन १२८७ तां कार्त्तिक माह संक्रान्तिदिवसे ग्रन्थः समाप्तः ।

## 5986.

181. *Māyātantram.*

Substance, foolscap paper. 15 × 4 inches. Folia, 10. Lines, 7, 9 on a page. Extent in ślokas, 200. Character, Bengali. Appearance, fresh. Complete.

The present MS contains chapters I–VII.

## 5987.

193. उत्तरतन्त्रे पुरश्चरणविवेकः । *Puraścaraṇaviveka from the Uttaratantram.*

Substance, country-made yellow paper. Folia, 3. Lines, 6–8 on a page. Extent in ślokas, 63. Character, Bengali. Appearance, old. Complete.

According to the colophon this MS contains the first chapter of the Uttaratantra. The present MS is described in L. I, 460.

## 5988.

139. ब्रह्मज्ञानमहातन्त्रराजः । *Brahmajñāna-mahātantrarāja.*

Substance, yellow country-made paper. Folia, 17. Lines, 11 on a page. Extent in ślokas, 340. Character, Bengali. Complete. Appearance, old. Complete in six chapters.

This MS has been noticed in L. I, 408. The work is also noticed in L. II, 642 and in VSP (p. 40). It speaks of the knowledge of Brahman in the manner of a Tantra, *e.g.*, in the form of an interlocution between Śiva and Pārvatī.

## 5989.

### 4628. *Brahmajñānamahātantrarāja.*

Substance, country-made paper. 13¼ × 5 inches. Folia, 10. Lines, 8 on a page. Extent in ślokas, 200. Character, Bengali. Appearance, fresh. Complete in five chapters.

Same as above.

## 5990.

### 5973B. **ब्रह्मसन्धानम् ।** *Brahmasandhānam.*

Substance, country-made paper. 11 × 5¼ inches. Fol. 17B–104. Lines, 11 on a page. Character, Nāgara. Extent in ślokas, 1,400. Appearance, old. Complete.

This is a yogic text.

*Beginning :—*

17B, अथ ब्रह्मसन्धानं लिख्यते ।

ॐ नमः कमलदलविपुलनयनाभिरामाय श्रीरामचन्द्राय नमः ।
नमः सूर्य्याय परमहंसाय लेखकस्य नेत्ररोगनाशकायेति शुभम् ॥
ॐ नमो भगवते वासुदेवायेति ।
ॐ यया लिङ्गितदेहस्य त्रैलोक्याद्यात्मसम्पदः ।
इमावत् प्रतिभासन्ते ब्रह्मलक्ष्मीं नमाम्यहम् ॥

स्कन्द उवाच ।

वेदवेदान्तसांख्यं वै स्मृतिसिद्धान्तमेव च ।
सर्व्वं मे विदितं चैव ब्रह्मसन्धानवर्ज्जितम् ॥

ईश्वर उवाच ।

शरीरं प्रथमं ज्ञात्वा धातुसाम्यं समं शुभम् ।
पश्चाद्युञ्जीत योगीन्द्रो योगोपकरणानि च ॥
पू[र]कं कुम्भकं चैव रेचकञ्च तथैव च ।
एते शरीरसाम्येन सम्भवन्ति हि योगिनाम् ॥

नाड्यः पवनाग्निर्धारा कारणमेव च ।
धातुसाम्ये स्थिते वत्स भवन्त्येतानि सङ्कुलाः ॥

*Colophons of the different chapters* :—

19B, इति ब्रह्मसन्धान उत्क्रान्तिनिर्णयो नामः प्रथमः पटलः; 21A, ०त्रिस्थानावस्थितब्रह्मनिर्णयो नाम द्वितीयः पटलः; 22A, ०प्राणनिर्णयो नाम तृतीयः पटलः; 22B, ०अयनद्वयनिर्णयो नाम चतुर्थः पटलः; 23A, ०सूर्य-विचारो नाम षष्ठः पटलः; 23B, ग्रहणनिर्णयो नाम सप्तमः पटलः; 24A, ०द्वादशान्तविचारो नामाष्टमः पटलः; ०स्थूलसूक्ष्मनिर्णयो नाम नवमः पटलः; 24B, ०निष्प्रपञ्चसमरसो नाम दशमः पटल; 25B, ०भूतोत्पत्तिविचार-निर्णयो नाम एकादशपटलः; 26A, ०भूतप्रलयो नाम द्वादशपटलः; 28A, ०प्राणोत्पत्तिविचारनिर्णयो नाम त्रयोदशपटलः; 28B, ०स्त्रीपुरुषोत्पत्तिवी[र्य]-विचारनिर्णयो नाम चतुर्दशपटलः; 29A, ०बीजोत्पत्तिविचारनिर्णयो नाम पञ्चदशपटलः; 31A, ०पिण्डोत्पत्तिविचारनिर्णयो नाम षोडशः पटलः; 31B, ०धातूत्पत्तिविचारनिर्णयो नाम सप्तदशः पटलः; 32B, ०शरीरावयवसंख्या-निर्णयो नाम अष्टादशपटलः; 33A, ०ब्रह्मवेशविचारनिर्णयो नाम एकोनविंशः पटलः; 34A, ०परब्रह्मनादोत्पत्तिविचारनिर्णयो नाम विंशतितमः पटलः; 35A, ०कालविचारनिर्णयो नाम एकविंशतितमः पटलः; 36B, ०शब्दोदयविचार-निर्णयो नाम द्वाविंशः पटलः; 37A, ०इष्टोपदेशविचारनिर्णयो नाम त्रयो-विंशतितमः पटलः; 38A, ०शिवतीर्थविचारनिर्णयो नाम चतुर्विंशतितमः पटलः; 38B, ०ध्याननिर्णयो नाम पञ्चविंशः पटलः; 40B, मानसपूजाविचारो नाम षड्विंशतितमः पटलः; 41A, ०जपविधाननिर्णयो नाम सप्तविंशतितमः पटलः; 42A, ०अग्निपूजाविचारनिर्णयो नामाष्टाविंशः पटलः; इति महाज्ञान-परम-रहस्य-चतुर्दशविधभूतसर्गे लयोत्पत्तिविचारसिद्धान्तकुलज्ञान-ब्रह्मसंधानं समाप्तम् ।

Titles appearing on the upper ends of the margin of every folium (*Brahmasandhāna* on the left and *Kumārī-kalpa* on the left) of the subsequent portion of the MS (Fol. 42B–104) would seem to represent it as a part of the

*Brahmasandhāna* or *Kumārīkalpa.* The contents, however, show that we have here extracts from six Tāntrika works as will appear from the descriptions given below :—

I. Kumārīpūjā (Fol. 42–48) which quotes from Saṅkarṣaṇayāmala, Viśvabhairava, Pātālapiṅgala, etc.

48B, इति कुमारीपूजाविधिसंग्रहः समाप्तः।

II. Uddhārakośa (Fol. 49–72) by the sage Dakṣiṇāmūrti which quotes from works like Tripurātilaka, Āgamālaṅkāra, Chinnāśiromaṇi, etc.

*Colophons of the different chapters :—*

52A, दक्षिणामूर्त्तिविरचिते उद्धारकोश-सर्व्वागमार्णवे दशविद्या-मन्त्रोद्धार-कोशगुणाख्यानं नाम प्रथमः पटलः; 55B, इति श्रीदक्षिणामूर्त्तिविरचिते उद्धारकोशे सर्व्वागमसारे षट्देवीमन्त्रोद्धारकोशसूचको नाम द्वितीयः कल्पः; 60B, ०सप्तविद्या-सप्तकुमारकोशाख्यानं नाम तृतीयः कल्पः; 62B, ०नवग्रह-मन्त्रोद्धारकोशाख्यानं नाम चतुर्थः कल्पः; 66A, ०सर्व्ववर्णकोशाख्यानं नाम पञ्चम-कल्पः; 72B, सर्व्वागममन्त्रसागरे सप्तमः कल्पः; समाप्तोऽयं उद्धारकोशः।

III. Durgārahasya (Fol. 72–84).

*Colophons of the different chapters :—*

74B, इति श्रीदुर्गारहस्ये मन्त्रविद्याप्रकाशो नाम प्रथमः पटलः; 75A, ०द्वितीयः पटलः; 75B, ०तृतीयः पटलः; 77A, ०चतुर्थः पटलः; 78B, ०पुरश्चर्य्याविधिर्नाम पञ्चमः पटलः; 79B, ०मन्त्रविद्याप्रकाशो नाम षष्ठः पटलः; 81A, ०सप्तमः पटलः; 82A, ०चक्रपूजाविधिर्नाम अष्टमः पटलः; 83A, ०नवमः पटलः; 84B, इति श्रीरुद्रयामले तन्त्रे दुर्गारहस्ये मन्त्रप्रकाशो नाम दशमः पटलः। सम्पूर्णोऽयं दुर्गारहस्याख्यतन्त्रराजश्चेति। शिवम्।

IV. Matsyodara Tantra (Fol. 85–96) which deals with yoga.

*Beginning :—*

85A, ॐ श्रीदेव्युवाच ।

श्रुतं देव मया सर्व्वं यामलं ब्रह्मयामलम् ।
कीदृशन्तु भवेद्ध्यानं सकलं निष्कलं तथा ॥
कीदृशन्तु भवेत्तीर्थं शरीरस्थन्तु भैरव ।
एतत्पृच्छाम्यहं देव सारं विज्ञानमुत्तमम् ॥

*Colophon :—*

96A, इति श्रीपरमरहस्यं सर्व्वागमोद्धृतसारात्सारतरं मत्स्योदरतन्त्रं नाम योगशास्त्रं समाप्तम् ।

V. प्राणाग्निहोत्रतन्त्र which is also a work on yoga (Fol. 96–102).

*Beginning :—*

श्रीकार्त्तिकेय उवाच ।

अल्पवित्ता नरा ये च अग्निहोत्रं न कुर्व्वते ।
तेषां प्राणाग्निहोत्रन्तु प्रसादं कुरु शूलभृत् ॥
शरीरेऽस्मिन् ह्यत्वाग्रय(?) को यजमानः का पत्नी, क ऋत्विक्

... ... ...

ईश्वर उवाच ... ... ...

अस्मिन् शरीरे सप्ताग्नयो भवन्ति ।
मुखे चाहवनीयोग्निर्दक्षिणाग्निर्मनःस्थितः ।
हृदये गार्हपत्योऽग्नि र्नाभ्यामौपसदः स्मृतः ॥

*Colophon :—*

102A, इति शिवभट्टारकेण कुमारस्य कथितं प्राणाग्निहोत्रं तन्त्रं समाप्तम् ।

VI. Rudrākṣa Kalpa which speaks of the origin of Rudrākṣa and the religious merit resulting from wearing rosaries made of it (Fol. 102–104).

*Beginning :—*

ॐ देव्युवाच ।

मम विस्मयमुत्पन्नं रुद्राक्षस्य तु सम्भवम् ।
दर्शनात् स्पर्शनाद्वापि किं पुण्यं धारणादपि ॥

*Colophon :—*

इति रुद्राक्षकल्पः तन्त्रोक्तः समाप्तः ।
शुभमस्तु लेखकपाठकयोः । शुभं भवे श्रेयोऽस्तु ॥

## 5991.

### 4649. पिच्छिलातन्त्रम् । *Picchilātantram.*

Substance, country-made paper. 19 x 4 inches. Folia, 7. Lines, 7 on a page. Extent in ślokas, 190. Character, modern Bengali. Appearance, discoloured. Incomplete.

This MS runs up to the end of the 12th chapter. The colophons represent this to be the first part (Pūrva-khaṇḍa) of the work. According to the post-colophon statement the 13th chapter was deliberately not copied as it dealt with what is called *bhūtaśuddhi*. The work is described in L. I. 295 and L. VI, 2188 which contain 21 and 14 chapters respectively. It deals principally with the worship of Kālī and incidentally gives incantations for various magic rites.

*Last Colophon :—*

इति पिच्छिलातन्त्रे पूर्व्वखण्डे द्वादशः पटलः ।

*Post Colophon Statement :—*

त्रयोदशपटलोऽत्र न लिखितः भूतशुद्धिप्रसङ्गात् । ॐ नमो दुर्गायै । ॐ विश्वेश्वराय नमः ।

## 5992.

### 3153. निबन्धमहातन्त्रम् । *Nibandhamahātantram.*

Substance, country-made yellow paper. 16×6 inches. Folia, 314. Lines, 8 on a page. Extent in ślokas, 7,838. Character, Bengali. Appearance, fresh. Complete.

The present MS has been described in L. X. 4265. The work consists of two parts. The first part in 87 chapters is divided into two kalpas—Sārasvatakalpa (chapters 1–82) and Śyāmākalpa (chapters 83–87). The second part in 33 chapters is divided into five kalpas—Māheśa° (chapters 1–9), Gāṇeśa° (chapters 10–18), Vaiṣṇava° (chapters 19–25), Saura° (chapter 26) and Śākta° (chapters 27–33).

## 5993.

### 3456. आचारसारतन्त्रम् । *Ācārasāratantram.*

Substance, country-made paper. 15×3½ inches. Folia, 9. Lines, 8 on a page. Extent in ślokas, 278. Character, Bengali. Appearance, fresh. Complete in 5 chapters.

The work is called by different names in different places. In the beginning of the present MS it is called Mahācīnatantrakrama (अथ महाचीनतन्त्रक्रमो लिख्यते) । The last colophon (इत्याचारसारे महारहस्ये श्रीपार्वतीशिवसम्वादे चीनाचार-महातन्त्रे पञ्चमः पटलः) calls it Cīnācāra and states that it forms part of the Ācārasāra. The present MS runs up to the end of the fifth chapter of the work. IO. IV. 2563 contains 7 chapters. The work has been printed in the *Vividhatantrasaṃgraha* in five Paṭalas under the title Mahācīnācāratantra. Several verses given in Chatterji's edition of the work after the end of the fifth chapter are not found in any of the MSS of the work described here.

## 5994.

### 1640. *Ācārasāratantram.*

Substance, country-made paper. 9½ × 3 inches. Folia, 28. Lines, 6 on a page. Extent in ślokas, 350. Character, Nāgara. Date, Saṃvat 1856. Appearance, old and worm-eaten. Complete in 7 chapters.

The first seven verses as found in the MS described above as well as in the India Office MS are not found here. The concluding verses of this MS agree with those of the India Office MS. The concluding verses of the three MSS described below, not found here or in the India Office copy, refer to the greatness of the Kaulas.

*Post Colophon :—*

अनिवेद्य यदा शक्तौ कुलद्रव्यं निवेशयेत् ।
देवताशापं आप्नोति तर्पणं निष्फलं भवेत् ॥
स्वशक्तिं परशक्तिं वा दीक्षितां गुरुमग्रतः ।
पाययित्वा पिबेत् द्रव्यमिति तन्त्रविदो विदुः ॥
सङ्केतं चापि योन्मत्तं यत्किञ्चित् वीरसाधनम् ।
कुलाचारं विना वत्स नैव सिद्धिप्रवर्त्तकम् ॥
समाप्तश्चायं ग्रन्थः ।
श्रीगुरुः पातु मे नित्यं पातु मे शङ्करः स्वयम् ।
श्रीदुर्गा पातु हृदयं हृदयानन्दरूपिणी ॥
संवत् १८५६ ।

## 5995.

### 2893. *Ācārasāratantram.*

Substance, country-made paper. 17½ × 4½ inches. Folia, 18. Lines, 5 on a page. Extent in ślokas, 324. Character, modern Bengali. Appearance, fresh. Complete in 7 chapters.

The present MS contains Paṭalas I–VII.

## 5996.

### 132. *Ācārasāratantram.*

Substance, country-made paper. 18 × 3¼ inches. Folia, 5. Lines, 6 on a page. Extent in ślokas, 95. Character, Bengali. Appearance, old. Incomplete.

This MS has been described in L. I. 470. It begins in the middle of the fourth Paṭala and runs up to the end of the seventh. The colophons of Paṭalas IV (fol. 1B) and V (fol. 3B) give the name of the work as Ācāratantra.

## 5997.

### 4189. मत्स्यसूक्तम् । *Matsyasūktam.*

Substance, country-made paper. 19¼ × 4 inches. Folia, 10. The first leaf is a restoration. Lines, 9 on a page. Extent in ślokas, 650. Character, Bengali. Date, Śaka 1695 and B.S. 1180. Appearance old and discoloured. Complete in 10 Paṭalas.

L. II. 608 refers to a work of this name as a compilation and describes a MS which contains chapters 35–60. The old collection of MSS of the Society has a MS (No. I. G. 7) which generally agrees with the MS described in L and contains chapters 35–64 of the Uparibhāga section of the work dealing with *Aśauca*, *Prāyaścitta* and *Vratas* taken from various Purāṇas. The last colophon in the latter MS attributes the work to Halāyudha.

*Beginnings and colophons of the different Paṭalas :—*

*Paṭala 1 :—*

ॐ नमः शिवाय ॥

नन्दवटुक उवाच ।

विरूपाक्ष महायोगिन् सर्व्वतत्त्वहिते रत ।
तारायाः परमं कल्पं रहस्यं कथयस्व मे ॥

किं कृत्वा तु चतुर्व्वर्गं दृष्ट्वा दत्तं महानिधिं ।
तत्वेन कथय त्वं मे त्वत्प्रसादात् प्रष्टोस्म्यहम् ॥

पराशर उवाच ।

कुब्जिका नाम सा देवी सुप्रभा बहुरूपिणी ।
शवासना कर्त्तृहस्ता चतुर्व्वाहुसमन्विता ॥
नीलोदारवपुः श्यामा सर्व्वालङ्कारभूषिता ।
लिखेच्च यन्त्रकं मन्त्रं हरिद्राचन्दनेन वा ॥
2A, बलिं दत्त्वा तु सकलं रम्भापुष्पं घृतप्लुतम् ।
शालमत्स्यञ्च पाठीनं गोधामांसमनुत्तमम् ॥
अन्नञ्च मधुना युक्तं बलिं दद्यात्तु मन्त्रवित् ।
न्यासं कृत्वा तथा ध्यानं यन्त्रमुद्धृत्य यत्नतः ॥
विना यन्त्रञ्च मन्त्रञ्च कवचं मन्त्रशून्यतः ।
... ... ... ... ...
मन्त्रकाले च सततं भार्य्यां यत्नेन वर्ज्जयेत् ।
वर्ज्जयित्वा विष्णुकल्पं वर्ज्जयेत्तुलसीदलम् ॥
वर्ज्जयेन्मालतीपुष्पं वर्ज्जयेद्विष्णुसन्निधिम् ।
पूजाकाले तु संप्राप्ते वासुदेवं स्मरेत्तु यः ॥
पूजाफलं न चाप्नोति नरकं प्रतिपद्यते ।

2B, इति मत्स्यसूक्ते सिद्धसम्वादे महोग्रताराकल्पे प्रथमाद्यः पटलः ।

*Paṭala II* :—

पराशर उवाच ।

सामान्यकल्पं विधिवत् कथ्यमानमिदं परम् ।
पूजाकल्पं महोग्रायाः दुर्ल्लभं भुवनत्रये ॥

3B, इति मत्स्यसूक्ते ताराकल्पे द्वितीयः पटलः ।

*Paṭala III :—*

पराशर उवाच ।

जन्मसंस्कारजं नाम पुत्रे जाते प्रशस्यते ।

मन्त्राक्षरं पूजयित्वा कुम्भकादितरा स्थिरं ॥

4A, इति मत्स्यसूक्ते तृतीयः पटलः ।

*Paṭala IV :—*

पराशर उवाच ।

यत्र यत्र स्थि... ... ... ... ... ।

प्रदक्षिणा-नमस्कारं शरणं तत्र दीयते ॥

गोरक्ष उवाच ।

पुरा यदुक्तं विप्रर्षे सर्व्वव्या[धि]विनाशनम् ।

निश्चितं कथितं सर्व्वं विरूपाक्षेण ब्राह्मण ॥

यः शृणोति यथातथ्यं श्रुत्वा त्वच्च सुभक्तितः ।

स्वर्गं निदर्शयेदेव सर्व्वलोकहिते रत ॥

5A, इति मत्स्यसूक्ते ताराकल्पे चतुर्थः पटलः ।

*Paṭala V :—*

विरूपाक्ष उवाच ।

अथातः संप्रवक्ष्यामि पूजाविधिमनुत्तमम् ।

7B, इति मत्स्यसूक्ते ताराकल्पे पञ्चमः पटलः ।

*Paṭala VI :—*

विरूपाक्ष उवाच ।

एवं पूजां यथाशक्त्या कृत्वा वै साधकोत्तमः ।

वक्ष्येऽथ मन्त्रं विधिवत् परितोष्य यथा गुरुम् ॥

8A, इति मत्स्यसूक्ते षष्ठः पटलः ।

*Paṭala VII :—*

पराशर उवाच ।

विरूपाक्ष महायोगिन् सर्व्वसत्त्वहिते रत ।
सन्देहं मम तं छिन्धि कृपया कृपणप्रिय ॥
एषा विद्या महाविद्या भुक्तिमुक्तिफलप्रदा ।
हठात् सिद्धिं न सिध्यन्ति साधकास्तु कथं मुने ॥

विरूपाक्ष उवाच ।

महाचीनक्रमावाप्ता तारिणी शीघ्रसिद्धिदा ।
न चेत् सिद्धिं न विन्दन्ति जनाः कल्पशतैरपि ॥

9A, इति मत्स्यसूक्ते सप्तमः पटलः ।

*Paṭala VIII :—*

अथान्यत् संप्रवक्ष्यामि तारायाः वीरसाधनम् ।
प्रातः शुचिरथाचान्तः सुखासीनो गुरुं स्मरेत् ॥

... ... ... ... ...

ततः सायं श्मशानस्थ मृतमानीय साधकः ।
प्रथमेन च बीजेन सर्व्वाङ्गं लेपयेत्ततः ॥

9B, इति मत्स्यसूक्ते अष्टमः पटलः ।

*Paṭala IX :—*

विरूपाक्ष उवाच ।

अथ भेदान् प्रवक्ष्यामि तारिण्याः सर्व्वसिद्धिदान् ।
येषां विज्ञानमात्रेण जीवन्मुक्तश्च साधकः ॥

10A, इति मत्स्यसूक्ते नवमः पटलः ।

*Paṭala X :—*

नन्दवटुकपराशरावूचतुः ॥
विरूपाक्ष महायोगिन् सम्यग् योगो धृतस्त्वया ।
सम्यक् च कथितो योगो न ताराक्रम उत्तमः ॥
किमुच्यते महाबाहो एकलिङ्गं चतुष्पथः ॥

विरूपाक्ष उवाच ।

चतुष्कोणान्तरे यत्र सल्लिङ्गं दृश्यते परम् ।
एकलिङ्गं विजानीयात् तत्र सिद्धिरनुत्तमा ॥
चतुष्पथं विजानीयात् मुद्राख्ये नारिणीश्मिला (?) ।
तत्र यत्नेन गन्तव्यं जप्तव्यं सिद्धिकाङ्क्षिभिः ॥

इति विरूपाक्षविरचिते मत्स्यसूक्ते सिद्धसंवादे महोग्रताराकल्पे दशमः पटलः ।

*Post Colophon* :—

श्रीगुरवे नमः ।

लिखितं श्रीसदाशिव देवशर्म्मणः स्वाक्षरमिदं सन ११८० साल शकाब्दाः १६६५ ।

## 5998.

### 3190. परमानन्दतन्त्रम् । *Paramānandatantram.*

Substance, European foolscap paper. 13×3 inches. Folia, 156. Lines, 5, 6 on a page. Extent in ślokas, 3,600. Character, Bengali. Appearance, fresh. Complete in 25 ullāsas.

It belongs to the school of Śrīvidyā. The Tantra speaks of itself as deceptive in object. Bhairava is ordered by Śankara to write Tantras with a view to delude the people of the iron age who are given to sensuousness and debauchery, so that they may, through their vicious propensities, be eager to accept the Tantra for their religion and be hurried down into degeneration. The present work does not agree with the *mantrakhaṇḍa* section of the work of the same name described in *Mad.*, XII, 5657, 5670–2.

*Beginning* :—

अनाद्यनन्तमानन्दमप्रतिष्ठं परं शिवम् ।
यदन्तर्भाति तत्त्वानां चक्रं तं प्रणमाम्यहम् ॥

श्रीदेव्युवाच ।

महेश देव देवेश विश्वकारण वल्लभ ।
त्वन्मुखात्तु मया देव तन्त्राणि बहुशः पुरा ॥
वैष्णवानि च शैवानि सौरगाणपतानि च ।
शाक्तान्यनेकरूपाणि विविधाचारकाण्यपि ॥
संश्रुतानि तथाप्यद्य परमानन्दसंभवः ।
नैव जातोऽतिगहनभावात्कर्मिश्रणादपि ॥
तस्मादद्य महादेव सुन्दर्यास्तन्त्रमुत्तमम् ।
सुव्यक्तं सुव्यवस्थञ्च परमानन्ददायकम् ॥
कृपया वद मे देव यद्यहं तव वल्लभा ।

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि सुन्दरीतन्त्रमुत्तमम् ॥
एतत्तन्त्रपरायणाच्च तव चापि महेश्वरि ।
यस्माच्च जायते देवि परमानन्दसंभवः ॥
तस्मात्तन्त्रमिदं प्रोक्तं परमानन्दसंज्ञितम् ।
पुरा कैलासशिखरे प्रोक्तवान् शङ्करः स्वयम् ॥
कदाचिद्देव्यहं तत्र स्थितस्तत्सेवनोद्यतः ।
पराशक्तिमहायस्य चन्द्रचूडस्य पार्श्वतः ॥
तदा विरिञ्चिविष्ण्वीशसेवितः परमेश्वरः ।
ब्रह्मादीनुक्तवान् देव भवन्तः सर्व्व एव हि ॥
नानाविधानि तन्त्राणि नानाकामप्रदानि च ।
कलौ सर्व्वमनुष्याणां कामोपहतचेतसाम् ॥
मोहकानि विचित्राणि कुर्व्वन्तु द्रुतमेव हि ।
एवं महेशेनाज्ञप्ताः स्वयम्भ्वाद्याः प्रणम्य तम् ॥
गतास्ततोऽहमाज्ञप्तस्तेन देवेन शम्भुना ।
त्वं भैरवगणैर्युक्तः कुरु तन्त्राण्यनेकशः ॥
पृथग् नानाविधानीति ततोऽहं प्रणिपत्य तु ।
बद्धाञ्जलिः प्रोक्तवान् तं देवदेवं जगत्पतिम् ॥

भगवन् देव चित्तं मे जातशङ्काकलङ्कितम् ।
तदाज्ञां देहि किञ्चित्त्वां पृच्छामि परमेश्वरम् ॥
ततः परशिवेनाहमाज्ञप्तो वद वत्सक ।
इत्यथाहमुवाचेदं वचश्श्रुत्वा महेश्वरि ॥
भगवन् करुणासिन्धुस्त्वं लोकस्य हिते रतः ।
किमर्थं लोकमोहाय आज्ञापयसि शङ्कर ॥
अथ देव उवाचेदं श्रुत्वा भैरव तत्त्वतः ।
न मे द्वेष्योऽस्ति न परः प्रियोऽस्ति जगतीतले ॥
उदासीनो ह्यसङ्गोऽहं शान्तमूर्त्तिरनुत्तरः ।
मामजानन्त एते वै लोकाः संचितकर्म्मणाम् ॥
नानाविधानां पाकेन भोगेषु नियतं रताः ।
तान् मोहयितुमेवैषा मम वामाङ्कसंगता ॥
स्वातन्त्र्यशक्तिर्मायाख्या महादुर्घटकारिणी ।
ममाज्ञारूपमापन्ना ब्रह्मादिषु निविश्य सा ॥
उद्भावयति तन्त्राणि नानाफलयुतानि वै ।
तेषां कर्म्मोपभोगाय पुनः पुनरनेकधा ॥
कलिधर्म्मप्रवृद्ध्यर्थं लोकाः कामपरायणाः ।
दुष्पूरकामलोभेन हतचित्ता दुराशयाः ॥
विषयाभिमुखास्तस्याः स्त्रीधनेच्छाः सदाऽशुभाः ।
आलोक्य तानि तन्त्राणि मोहात् पण्डितमानिनः ॥
मन्मायापहृतज्ञाना गुरुहीना गुरुद्रुहः ।
तत्तत्तन्त्रसदंशेषु मोहेनान्धीकृता जडाः ॥
असदंशेष्वेव जनाः प्रवृत्ताः कामनापराः ।
तदाशयमविज्ञाय मूढास्तत्कर्म्मसंरताः ॥
अन्ते तत्कर्म्मपाकेन विहता बहुधा नराः ।
अन्धं तमो विशन्त्येते सर्व्वे एवात्र मानवाः ॥

*End* :—

अद्वैतविद्यां श्रीविद्यां परमानन्दरूपिणीम् ।
विज्ञाय पुरुषार्थैं[र्न] स्वगल्यां पिबत्[य]सौ ॥
तस्मादेतत् प्रयत्नेन गोपनीयं महेश्वरि ।
यदिदं पशवे देवि निन्दकाय समर्पयेत् ॥
एतत्तन्त्रं पठन् देवि लिखंश्चापि प्रपूजयन् ।
देवताप्रीतिमाप्नोति पुरुषार्थान् समश्नुते ॥

*Colophons of the different chapters* :—

2B, इति श्रीमत्परमानन्दतन्त्रे भैरवदेवीसंवादे तन्त्रावतारो नाम प्रथमोल्लासः; 4A, इति श्रीमत्परमानन्दतन्त्रे तन्त्रभेदनिर्णयो नाम द्वितीयोल्लासः; 5B, ०श्रीविद्यास्वरूपकथनं नाम तृतीयोल्लासः; 8B, ०बालामन्त्रोद्धारादिकथनं नाम चतुर्थोल्लासः; 10A, ०बालासन्ध्यान्तविधिकथनं नाम पञ्चमोल्लासः; 14B, ०द्वारपूजादिन्यासान्तकथनं नाम षष्ठोल्लासः; 18B, ०सप्तमोल्लासः; 28A, ०अष्टमोल्लासः; 32B, ०नवमोल्लासः; 37A, ०दशमोल्लासः; 41A, ०एकादशोल्लास; 51A, ०द्वादशोल्लासः; 61B, ०त्रयोदशोल्लासः; 76B, ०चतुर्दशोल्लासः; 94B, ०पञ्चदशोल्लासः; 100B, ०षोडशोल्लासः; 107B, ०सप्तदशोल्लासः; 114A, ०अष्टादशोल्लासः; 118A, ०एकोनविंशतितमोल्लासः; 122B, ०विंशतितमोल्लासः; 133A, ०एकविंशतितमोल्लासः; 135B, ०द्वाविंशोल्लासः; 145A, ०काम्यविधिस्त्रयोविंशतितमोल्लासः; 155A, ०चतुर्विंशोल्लासः; 156A (the last colophon) इति श्रीपरमानन्दतन्त्रे भैरवदेवीसंवादे सर्व्वतन्त्रसारे पञ्चविंशोल्लासः समाप्तः ।

## 5999.

### 3601. सिद्धलहरीतन्त्रम् । *Siddhalaharītantram.*

Substance, country-made paper. 16¼ × 3¼ inches. Folia, marked 1 to 28 on the right hand side, and 190 to 217 on the left hand side. Lines, 5 on a page. Extent in ślokas, 560. Character, modern Bengali. Appearance, fresh. Complete in nine chapters.

The work deals with the details of the worship of Kālī and the mystic significance of the fifty letters of the Sanskrit alphabet. It is generally in the form of an interlocution between Jātūkarṇa and Nārada though interlocutions between Pārvatī and Śiva as also between Subhagā and Nārada are also occasionally met with. *Gautamī Tantra* is referred to in fol. 11A ( यद्मोक्तं गौतमीतन्त्रे नान्यतन्त्रेषु तद्वद ).

*Beginning, giving contents of the work* :—

जातूकर्णं उवाच ।

विफलो बीजहीनश्च सन्दिग्धोऽस्तमितस्तथा ।
मन्त्रवत्ते न सिध्यन्ति स्याद्गुरुः शब्दघातकौ ॥
ब्रह्मपुत्र महाभाग मदर्थं चास्य मे वद ।

नारद उवाच ।

प्रफुल्लकलिकाबीजं बीजद्वयमितीरितम् ।
रजः-सत्त्व-तमोपेतं चन्द्रबिन्दुसमन्वितम् ॥
प्रफुल्लं ब्रह्मवाक्येषु कथितं भक्तितस्तव ।
कालिका केरलीवर्णा अष्टमिद्धिस्त्रयो गुणाः ॥
विशेषज्ञान वक्ष्यामि यच्छ्रुतं(?) शिववक्त्रतः ।
रामकृष्णास्तथा विष्णुः शिवो दुर्गा च कालिका ॥
त्रिपुरा भैरवी लक्ष्मी[स] तारा च बगलामुखी ।
चतुर्थ्यन्तं नमोऽन्तेन मन्त्रविद्याः पृथक् पृथक् ॥
एतेषां मन्त्रविद्यानां आद्यन्ते मुनिनन्दन ।
प्रफुल्लं यदि नो विप्र तद्रूपं विफलं द्विज ॥

*End* :—

नवलक्षमहाविद्याः कालिकायाः सुदुर्लभाः ।
सर्व्वासां चैव विद्यानां भाग्डारं द्वाविंशदक्षरी ॥
कामराजात् समुद्भूता द्वाविंशत्यक्षरी परा ।
द्वाविंशत्यक्षरी चैव नवलक्षादिनिर्गता ॥

द्वाविंशदद्भुता विद्या कवचेषु निरूपिता ।
प्रधानां मन्त्रलक्षाणां द्वात्रिंशन्मुनिनन्दन ॥
किं बहूक्त्या महाभाग गच्छामि व्याससन्निधिम् ।
इत्युक्त्वा प्रययौ शीघ्रं नारदो व्याससन्निधिम् ॥

After the ninth chapter there occurs an extract (Fol. 27B) in the form of an interlocution between Śiva and Pārvatī. It is not known if this is also a part of the present work.

This section begins as follows:—

देव्युवाच ।
देव देव महादेव सर्वागमविशारद ।
अधुना देवदेवेश महाशरदर्गनिर्णयम् ॥
तत्त्वं रूपञ्च ध्यानञ्च कथयस्व दयानिधे ।

## 6000.

### 10608. नारसिंहकल्पम् । *Nārasiṁhakalpam.*

Substance, country-made paper. $10\frac{3}{4} \times 4\frac{1}{4}$ inches. Folia, 22. Lines, 9 on a page. Extent in ślokas, 594. Character, modern Nāgara. Appearance, fresh. Complete in eight chapters.

It deals with the worship of Nṛsiṁha, a form of Viṣṇu.

*Beginning* :—

ॐ विशुद्धविज्ञानघनस्वरूपं
विज्ञानविश्राणनबद्धदीक्षम् ।
दयानिधिं देहभृतां शरण्यं
देवं हयग्रीवमहं प्रपद्ये ॥
या वैष्णवी सुखसदद्वयबोधरूपा
भूम्यादिपञ्चकतया बहुधा विभिन्ना ।
तां षोडश-द्वितयनस्वनृसिंहमूर्त्तिं
तां मूलशक्तिममलां प्रणतोस्म्युदारां ॥

The MS begins with the commentary on the 4th introductory verse of the text and runs up to the end of the 10th ullāsa.

## 6203.

### Kṛṣṇa Vidyāvāgīśa.

### 10949. तन्त्ररत्नम् । *Tantraratna.*

Substance, country-made paper. 11 × 5¼ inches. Folia, 142. Lines, 15 on a page. Character, Nāgara. Date, N.S. 875 and Śaka 1677. Appearance, good. Complete (?).

MSS of the work have been described in L. I. 240 and IO. IV. 2573. The present MS, like the one described in IO, contains details of the worship of two deities, e.g., Kālī and Tārā. The work is based on various original Tantra texts. A list of these, identical with the one found in the beginning of the *Nityāṣoḍaśikārṇava* section of the *Vāmakeśvaratantra*, is given in the introductory portions of the work. The work also refers to a number of later compilations and authors like Rāghavabhaṭṭa (Fol. 25, 26).

*Post-colophon Statement:—*

शुभं भूयात्। नेपाल संवत् ८७५ श्रीशाके १६७७ माघ कृष्णचतुर्थ्यां तिथौ उत्तरफल्गुनीनक्षत्रे अतिगण्डयोगे शुक्रवासरे इदं पुस्तकं धनञ्जयेन लिखितं। सम्पूर्णम्।
श्रीसीतारामभट्टस्य पुस्तकमिदं॥ श्रीश्रीश्रीकृष्णायै नाम

## 6204.

### Sarvvānandanātha.

### 3447. सर्वोल्लासः । *Sarvvollāsa.*

Substance, country-made yellow paper. 12¾ × 4 inches. Folia, 1-14 + 1-99. Lines, 7-8 on a page. Extent in ślokas, 2,250. Character, Bengali. Appearance, new. Incomplete in the middle.

A complete MS of this work is described in L. III. 1071. The first portion of the present MS contains chapters 1 to 5 and a small portion of chapter 6. The second portion contains a very insignificant portion of chapter 10 and chapters 11 to 63.

*Beginning:*—

नमामि प्रकृतिं नित्यां जगदात्मस्वरूपिणीम् ।
सर्व्वोल्लासं महोल्लासं महोल्लासे वदाम्यहम् ॥
निगमागममाच्छास्त्राद्भावाचारं समुद्धृतम् ।
श्रीसर्व्वानन्दनाथोक्तं श्रीदेव्याचरणाम्बुजे ॥

A list of Tantras, as given in the *Toḍalatantra*, is quoted thus (Fol. 4A):—

चतुःषष्टीनि तन्त्राणि मयैवोक्तानि कामिनि ।
कालीतन्त्रमुण्डमालातारानिर्व्वाणकानि च ॥
शिवसारं वीरतन्त्रलिङ्गार्च्चनतलार्च्चन [म्] ।
तोडलं नीलतन्त्रञ्च राधातन्त्रं महेश्वरि ॥
विश्वसारं भैरवाख्यं भैरवीतन्त्रमेव च ।
सिद्धेश्वरमातृभेदसमयातन्त्रकं शिवे ।
गुप्तसाधनतन्त्रञ्च मातृकातन्त्रमेव च ।
मायातन्त्रं महामाया अद्वयातन्त्रकं शिवे ॥
कुमार्य्याख्या महत्तन्त्रं कुलार्णवमतः परम् ।
कालिकाकुलसर्व्वस्वं कालिकाकल्पतन्त्रकम् ॥
वाराही योगिनीतन्त्रं योगिनीहृदयं शिवे ।
सनत्कुमारतन्त्रञ्च त्रिपुरासारतन्त्रकम् ॥
योगिनीविजयं भद्रे मालिनीतन्त्रमेव च ।
कुक्कुटाख्यं महत्तन्त्रं श्रीगणेशाख्यतन्त्रकम् ॥

भूततन्त्रं तथोड्डीशं कामधेनुं तथोत्तमम् ।
वीरभद्रं महातन्त्रं वामकेश्वरतन्त्रकम् ॥
कुलचूडामणितन्त्रं भावचूडामणिं प्रिये ।
ज्ञानार्णवञ्च वरदातन्त्रचिन्तामणिं ततः ॥
कालीविलासकं तन्त्रं हंसतन्त्रं महेश्वरि ।
चिदाम्बरतटतन्त्रं विज्ञापनमतः परम् ॥
फेत्कारिणीं च नित्याख्यं तन्त्रमुत्तरसंज्ञकम् ।
नारायणीमहातन्त्रमूर्द्धाम्नायकतन्त्रकम् ॥
ज्ञानदीपगौतमीयतन्त्रं निरुत्तरं प्रिये ।
गान्धर्व्वकुब्जिकातन्त्रं मुक्तावलिं ततः परम् ॥
वृहद्विक्रमतन्त्रञ्च स्वतन्त्रतन्त्रकं प्रिये ।
योनितन्त्रञ्च कामाख्यां तन्त्रं प्रोक्तं वरानने ॥
चतुःषष्टीनि तन्त्राणि मयैवोक्तानि सम्प्रति ॥
प्रतितन्त्रे पटलानि चतुःषष्टीनि पार्व्वति ।
असंख्यानि च तन्त्राणि भावानि विविधानि च ॥
सर्व्वयामलसंगीतं चतुःषष्टिप्रकाशकम् ।
प्रधानमेतद्विज्ञेयं चतुर्युगमतं ध्रुवम् ॥

*End:—*

सि[ द्धे ]( द्धि )र्हि कारणं ब्रह्म सर्व्वंचैव कुलेश्वर ।
यो विजानाति तत्त्वेन देहान्ते ब्रह्मभाग्भवेत् ॥

*Colophon:—*

इति श्रीसर्व्वानन्दनाथविरचिते सर्व्वोल्लासे ब्रह्मज्ञानं नाम त्रिषष्ठ्युल्लासः ॥ ६३ ॥

*Post-colophon Statement:—*

श्रीब्रह्मानन्दनाथस्य पुस्तकमिदम् ।

# 6205.

**Candraśekhara.**

## 8934. पूजापुष्करिणी । *Pūjāpuṣkariṇī.*

Substance, country-made paper. 10¼ × 4½ inches. Folia, 58. Lines, 8 on a page. Extent in ślokas, 1,160. Character, Nāgara. Appearance, fresh. Complete in seven chapters.

It deals with the daily rites of a Tantric worshipper.

*Beginning:—*

जयति निखिलहेतुः पार्व्वतीशो रमेशो
विधिहरिहरवन्द्या शक्तिरूपा महेशी ।
विबुधबुधवरेण्यो यो गणेशो दिनेशः
परमपुरुष एकः पञ्चधेशश्चिदात्मा ॥
तन्त्राण्यनेकान्यालोच्य पूजापुष्करिणी मया ।
देवानुग्रहमासाद्य रच्यते विदुषां मुदे ॥
कर्म्ममार्गप्रवृत्तानां सिद्धिदा यावदाहवात् ।
विश्वेशानुग्रहीतश्रीचन्द्रशेखरशर्म्मणा ॥

उषसि शिरसि सहस्रदलकमले गुरुं चिच्छक्त्युपेतं वराभयकरं ध्यात्वावश्यकं कृत्वा तीर्थं गत्वा स्नानं कुर्य्यात् । अथ स्नानविधिः ।

*End:—*

इति श्रीविश्वेशानुग्रहीतश्रीचन्द्रशेखरनिर्म्मिता भागीरथ्याः स्तुतिरेवं भूयात् तत्प्रीतये सदा शं । इति पूजापुष्करिण्यां सप्तमी वीचिः पुष्करिणी च समाप्तिमगमत् । शुभमस्तु ।

पूजापुष्करिणी विधानकमलैराढ्या विचित्रैः परा
वीचिभिश्च समन्विता बहुविधाभिः सप्तभिर्निर्म्मला ॥
मन्त्राम्भोभिर्विराजितेष्टलतिका संवर्द्धिका सेवतां
विद्वन्मानसहंसतोषणपरा भूयाद्विभोः प्रीतये ॥

## 6206.

**Pragalbhācāryaśiṣya—Disciple of Pragalbhācārya.**

### 5476. विद्यार्णवः । *Vidyārṇava.*

Substance, country-made paper. 15 × 7 inches. Folia, 135. Lines, 15 on a page. Extent in ślokas, 2,000. Character, Nāgara. Appearance, worm-eaten. Incomplete at the end.

The present MS contains 11 chapters (*Āśvāsas*) and a portion of the 12th. The work deals with the details of the worship of various Śākta deities.

*Beginning:—*

उद्यत्सूर्यसहस्रभासुरतनुः सूक्ष्मातिसूक्ष्मा परा
उद्यत्पुञ्जनिभेन्दुकोटिसदृशी धामत्रयाध्यासिनी ।
तत्तेजस्वितयात्मिकैकमनुभि-र्वाक्यप्रपञ्चात्मयुक्
कूटैस्त्र्यश्विप्रवर्त्तिभिः परिगता नित्यात्मिका पातु वः ॥ १ ॥
या श्री मधुमती शक्तिर्जगच्चैतन्यरूपिणी ।
सास्तां मे पुरतो नित्यं मालिनी विश्वविग्रहा ॥ २ ॥
मतद्वयं समालोच्य तत्प्रक्रियाभिधया पृथक् ।
प्रकाश्यते परातत्त्वं मया विद्यार्णवाभिधम् ॥ ३ ॥
मधुमत्या महादेव्यास्तादात्म्यकादिसंज्ञकम् ।
कालीमतन्तु मालिन्यास्तादात्म्यं तान्त्रिका विदुः ॥ ४ ॥
षट्त्रिंशद्वाजनैर्मूलभूतैः शिवमयैः पृथक् ।
षोडशस्वरसंभिन्नैः पूर्णमण्डलसंज्ञकैः ॥ ५ ॥
षट्त्रिंशद्गुणितैः सिद्धकालनित्यास्वरूपकैः ।
सवात्मकैराशिभेदात् त्रिगुणीकृतविग्रहैः ॥ ६ ॥
तद्वैगुण्यमयैस्तत्त्वैर्यन्नैकादिगुणीकृतैः ।
तत्तद्भेदैर्भिन्नमूर्त्तिः प्रोक्ता वेदप्रकारिका ॥ ७ ॥
षट्त्रिंशत्तत्त्वसम्पूर्णा सर्वमन्त्रफलप्रदा ।
देवीमधुमतीयानतादात्म्यकादिसंज्ञकम् ॥ ८ ॥

Of the works quoted here, mention may be made of the following:—

कुलार्णव, भैरवीतन्त्र, तत्त्वसागर, पिङ्गलामत, रुद्रयामल, त्रिपुरार्णव, तन्त्रराज, योगिनीहृदय, सिद्धसारस्वततन्त्र, शारदा, ज्ञानार्णव, वामकेश्वर, त्रिपुरासार, फेत्कारिणीतन्त्र, कालिकापुराण, योगशास्त्र, श्रीविद्या, अगस्त्यसंहिता, वैशम्पायनसंहिता, स्वच्छन्दसंग्रह, श्रीक्रम, भूतभैरव, दक्षिणामूर्त्तिसंहिता, सारसंग्रह, भविष्योत्तरपुराण, योगिनीतन्त्र, वास्तुशास्त्र, प्रपञ्चसार, लक्षणसंग्रह, कुलमूलावतार, वशिष्ठसंहिता, सोमशम्भु ।

Stein (p. 237) notices a MS of the *Vidyārṇava* attributed to Pragalbhācārya, disciple of Viṣṇuśarman. In the present MS, however, the work is attributed to a disciple of Pragâlbhācārya whose line of teachers is indicated as follows:—

2B, शङ्कराचार्य्यशिष्याश्च चतुर्दश दृढव्रताः ।
देवात्मानो दृढात्मानो निग्रहानुग्रहक्षमाः ॥ ६० ॥
शङ्करः पद्मपादाख्यो बोधो गीर्वाण एव च ।
आनन्दतीर्थनामा च पञ्चैते भिक्षवः स्मृताः ॥ ६१ ॥
सुन्दरो विष्णुशर्मा च लक्ष्मणो मल्लिकार्जुनः ।
त्रिविक्रमः श्रीधरश्च कपर्दी केशवस्तथा ॥ ६२ ॥
दामोदर इति ख्याताः गृहिणो नवसंख्यकाः ।
... ... ... ...
... ... ... ...
श्रीविष्णुशर्म्मणः शिष्यः प्रगल्भाचार्य्यपण्डितः ।
तच्छिष्येण मया प्रोक्ते ग्रन्थेऽस्मिन् पूर्णतां गते ॥ ७९ ॥

The author who conceals his name gives a long story of a quarrel between Lakṣmaṇa Deśika and King Prauḍhadeva. Our author is stated to have, at the wish of the subjects, succeeded Prauḍhadeva to the throne which was

made over to his son presumably on his attaining majority. He also built the town of Vidyānagara resembling the Śrīcakra of the Tāntrikas. It was at the desire of the prince that the present book was written:—

3A, श्रीविद्यानगरं नाम्ना श्रीचक्राकारमुज्ज्वलम् ॥ ८१ ॥
निर्माय प्रौढदेवस्य पुत्रो राज्यार्हतां गते ।
तमेव देवभूपालमुपवेश्य नृपासने ॥ ८२ ॥
तदाज्ञया तत्सदृशैर्विद्वद्भिर्विमलार्थिभिः ।
सम्प्रार्थितोऽहमम्बाया आज्ञामादाय यत्नतः ॥ ८३ ॥
नानातन्त्राणि संशोध्य यामलानि च सर्वशः ।
मतद्वयं समालोच्य ग्रन्थं विद्यार्णवाभिधं ॥ ८४ ॥
मुदा रचितवानस्मि लोकानामुपकारकम् ।

## 6207.

### Govinda Sārvabhauma.

### 5641. तन्त्रप्रकाशः । *Tantraprakāśa.*

Substance, country-made paper. 18×3¾ inches. Folia, 1–168, of which Folia 39–43 are missing, while two folia each are marked 79 and 160. Lines, 8 on a page. Extent in ślokas, 8,000. Character, Bengali. Appearance, very old and discoloured. Incomplete.

The work deals with various Tantric rites (like *dīkṣā*, *puraścaraṇa*, etc.) in a general way and describes the details of the worship of deities like Tārā, Tripurā, etc.

*Beginning:*—

नित्यानन्दमयं नत्वा गोविन्देन च धीमता ।
धर्मार्थकाममोक्षार्थमागमोऽत्र प्रकाश्यते ॥

*Colophons* :—

50B, इति श्रीगोविन्दसार्व्वभौमविरचिते तन्त्रप्रकाशे दीक्षाप्रकाशः प्रथमः परिच्छेदः ।

76B, इति श्रीगोविन्दसार्वभौमभट्टाचार्यविरचिते तन्त्रप्रकाशे द्वितीयः परिच्छेदः ।

No other colophon could be traced. A new chapter, dealing with the details of the worship of Tārā, begins on Fol. 117B.

## 6208.

**Rāmaratna.**

### 3911. तिमिरचन्द्रिका । *Timiracandrikā.*

Substance, country-made paper. 16½ × 4½ inches. Folia, 36. Lines, 6 on a page. Extent in ślokas, 650. Character, Bengali. Appearance, discoloured. Incomplete at the end.

The work deals with the details of Tantric worship as well as the daily duties of a Tantric worshipper.

*Beginning* :—

ॐ श्रीगुरवे नमः ।

चित्रा वासरशर्व्वरीसमकरा चैतन्यचन्द्रोदया
नानाचारविचारविश्वविमलज्ञानैकगम्या द्युतिः ।
कापि ध्वान्तहतान्तदर्पदलिता पापप्रतापापहा
पूर्णानन्दविधायिनी हृदि मया संध्याप्यते पूर्णिमा ॥
कलौ स्वल्पायुषः सर्व्वे साधकाः स्वल्पबुद्धयः ।
विधास्ये साधनन्तेषां येन पूर्णं भवेद्ध्रुवम् ॥
नानागमसमुद्रेभ्यो नानानिगमसागरात् ।
विविच्य पद्यरत्नानि निबध्नन्ते समासतः ॥

श्रीरामरत्नरचितां कृत्वाकृत्यतमोहराम् ।

शुद्धीं कुर्वन्तु गुरवः प्राचीनपद्यनिर्म्मिताम् ॥

विविधविबुधकृतबहुविधमतानुसारेण मन्दबुद्धीनां नानाविध-
संशयतिमिरौघो जातः ।

तद्दूरीकरणाय तिमिरचन्द्रिका नाम संग्रहो दीप्यतु श्रीगुरोरनु-
ग्रहात् ।

*Colophons:—*

6B, इति तिमिरचन्द्रिकायां दीक्षादिनिर्णयः प्रथम उल्लासः; 7B, ०प्रातःकृत्यनिर्णयो द्वितीय उल्लासः; 11B, ०दन्तधावनादिनिर्णयः तृतीय उल्लासः; 16A, ०अन्तर्यागादिविधिनिर्णयः पञ्चम उल्लासः; 21B, ०स्नानशोधनादिपूर्व्वकपूजानिर्णयः षष्ठः उल्लासः; 26A, ०उपचारादिनिर्णयः सप्तम उल्लासः; 29A, ०निशापूजनादिविधाननिर्णयः सप्तमः (? अष्टमः) उल्लासः; 33B, ०शिवलिङ्गार्चननिर्णयः अष्टम उल्लासः ।

Works and authors quoted and referred to :—

2A, कुलार्णव; 6B, श्यामारहस्य; 12A, तन्त्रगान्धर्व्वं; 16B, गन्धर्व्वतन्त्र; 20A, यामल; 24A, मुण्डमाला; 25A, यामल; 25B, अन्नदाकल्प; 29A, लिङ्गार्चनतन्त्र; 30A, मातृकाभेद; 34A, सम्मोहनतन्त्र; 36B, मातृकाभेदतन्त्र ।

The following occurs on the left hand margin of the manuscript :—

श्रीनीलमणिशर्म्मणः ॥ मालोड़ाग्रामवासः ॥

## 6209.

**Kṛṣṇamohana.**

## 3375. आगमचन्द्रिका । *Āgamacandrikā.*

Substance, country-made paper. 21½ × 3¾ inches. Folia, 1–56, of which Fol. 20 is missing. Lines, 6 on a page. Extent in ślokas, 1,950. Character, Bengali. Appearance, faded. Incomplete at the end.

This work is referred to as one of his own in the concluding verse of the 5th canto of the *Kamalodaya* by Kṛṣṇamohana (VSP, p. xxvi).

*Beginning:*—

सहस्रदलनीरजे जितसितांशुकोटिद्युतिं
वराभयलसत्करं करुणयान्वितं कान्तया ।
अलोलचपलाभया रुचिरवामभागं भजे
गुरुं शुचिमविच्छदं निखिलकामकल्यागमम् ॥
कारुण्यार्णवभूमिदेवचरणां चिन्तामणिं चिन्तयन्
आहृत्य प्रथितप्रचारकतिचित्तन्त्रादिसारोत्तमम् ।
प्रीतः श्रीयुतकृष्णमोहन इमां विख्यातसंख्यावताम्
मुख्यैरागमचन्द्रिकां कलयति ज्ञानार्णवोल्लासिनीम् ॥

*Colophon:*—

13B, वाणीपादाम्बुजगलत्-मकरन्दलुब्ध-
श्रीकृष्णमोहनकृतागमचन्द्रिकायाः ।
उल्लास एष जनमानसतामसघ्नो
दीक्षाप्रकारनियमः प्रथमः समाप्तः ॥

इति श्रीकृष्णमोहनकृतागमचन्द्रिकायां दीक्षाप्रकारनियमनामा प्रथम उल्लासः ।

No other chapter colophon is found. There are, however, a number of sectional colophons referring to the topics dealt with (e.g., इति कालीप्रकरणम्, इति ताराप्रकरणम्, etc.). The work describes rules of initiation and deals with the details of the worship of Kālī, Tārā, Śrīvidyā, Bhuvaneśvarī, Bhairavī, Chinnamastā and Lakṣmī.

## 6210.

**Śivarāma.**

### 3337. तन्त्ररत्नम् । *Tantraratna.*

Substance, country-made paper. 13½ × 4½ inches. Folia, 14. Lines, 9 on a page. Extent in ślokas, 420. Character, Bengali. Appearance, discoloured. Incomplete at the end.

This deals with *dīkṣā* and Tantric worship in general.

*Beginning*:—

प्रणम्य परमात्मानं शिवरामेण धीमता ।
तन्त्रात् सारं समाहृत्य तन्त्ररत्नं प्रकाश्यते ॥
उच्यते प्रथमं तत्र लक्षणं गुरुशिष्ययोः ।
शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेशवान् ॥
शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥
आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ।
निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ॥

Topics dealt with in the work:—

1A, इति गुरुलक्षणम् ; इति शिष्यलक्षणम् ; 3B, अथ नक्षत्रचक्रम् ; 4A, अथ अकथहचक्रम् ; 4B, अथाकडमचक्रम् ; अथ ऋणिधनिचक्रम् ; 5A, अथ विद्यारम्भः ; अथ वारनियमः ; 5B, अथ तिथिनियमः ; अथ नक्षत्रनिर्णयः ; अथ लग्ननिर्णयः ; 6A, अथ पक्षनिर्णयः ; अथ मालानिर्णयः ; 6B, अथ मन्त्रसंस्कारः ; 7A, अथ दीक्षाप्रयोगः ; 8A, अथोपदेशः ; अथ पञ्चायतनी दीक्षा ; 8B, अथ पुरश्चरणम् ; 9A, अथ कूर्मचक्रम् ; 11B, अथ पुरश्चरणप्रयोगः ; 12A, अथ ग्रहणपुरश्चरणसंकल्पः ; अथ सामान्यपूजापद्धतिः ; 13B, विष्णुगायत्री, गोपालगायत्री ।

Works quoted:—

1A, योगिनीतन्त्र, गणेशविमर्शिनी ; 2B, वाराही ; 7B, गौतमीय, वाशिष्ठ ; 8A, यामल ; 9A, अगस्त्यसंहिता ; 11A, क्रियासार ; 11B, कुलार्णव ; 12A, नीलतन्त्र, भैरवतन्त्र ; 12B, यामल, गौतमीयतन्त्र ।

## 6211.

### Rāmānanda.

### 3603. अभिज्ञानरत्नावली । *Abhijñānaratnāvalī.*

Substance, country-made paper. 18¼ × 3¾ inches. Folia, 425. Lines, 6, 7 on a page. Extent in ślokas, 10,200. Character, Bengali. Appearance, discoloured. Incomplete.

The MS contains three large chapters and a great portion of the fourth chapter. The first chapter speaks of the superiority of śakti, the second deals with *mantra*, *kuṇḍa*, *maṇḍala* and *vāstuyāga*, the third treats of initiation, *pūjā*, *nyāsa*, etc., and the fourth which is incomplete in the present MS deals with *puraścaraṇa*, animal sacrifice and daily rites. This is a comprehensive Tantric digest pertaining to śakti worship.

*Beginning*:—

या सृष्टिस्थितिसंहृतीः प्रकुरुते ब्रह्माच्युतोमापति-
ख्यातात्तामभिवन्द्य भर्गमूर्द्धिशों श्रीनाथमप्यादरात् ।
विश्वानन्दपितृप्रसादविभवैर्निमथ्य शास्त्राम्बुधिं
रामानन्दधरामरोऽभितनुतेऽभिज्ञानरत्नावलीम् ॥
जीमूतालीसुनीला स्रवदतिरुधिरोत्तुङ्गमुण्डावलीना
तारा तारोपवक्त्रा पुरहरहृदयाबद्धपादारविन्दा ।
खड्गं कर्त्रीं कपालं प्रहसितकुमुदं दोश्चतुष्कैर्दधाना
पायान्मां नीलवाणी भवभयशमना शाम्भवी शक्तिराद्या ॥
मातः पार्थिवपांसुपुञ्जगणनामेकैकशोऽशेषतः
कर्तुं सागरवारिविन्दुगणनां प्रत्येकमप्यान्तिमाम् ।
शक्तोऽप्याद्यवसानशून्यगणिताधाराभिधाने यतः
शक्तो नैव भवेदतो न च मया वर्ण्यो गुणास्तेऽनघे ॥

क्वाहं निन्दायबुद्धिः क्व च तव चरितं पुण्यपुञ्जैर्निगद्यं

मातर्जानामि सत्यं तदपि तव पदाब्जस्य पूजाकथायाम् ।

श्रद्धा मां वाचयन्ति न भवति भविता तत्र हेतुः प्रणामो

ये मद्भात्वा नमन्ति त्वदमलचरणौ तद्भवद्वे[व ते](तरे)षाम् ॥

*Colophons of the different chapters:—*

51B. इति श्रीरामानन्दतर्कालङ्कारविरचिताभिधानरत्नावल्यां प्रथमं रत्नम् ।

143A, ०द्वितीयरत्नम्; 339B, ०तृतीयरत्नम् ।

## 6212.

**Prāṇapati.**

### 3599. अर्चनसंग्रहः । *Arcanasaṃgraha.*

Substance, country-made paper. 18×4 inches. Folia, 16 to 121. Lines, 8 on a page. Extent in ślokas, 1,200. Character, Bengali. Appearance, worn out. Incomplete at both ends.

This gives the *pramāṇa* and *paddhati* of the different elements of the Tantric form of worship. The MS contains the first four chapters of the work. The first chapter, of which there is only one leaf, appears to deal with the significance of various terms like *guru*, etc. The second chapter speaks of *dīkṣā* (initiation) with its many forms. The third chapter treats of *puraścaraṇa* and rites connected with it. The fourth chapter deals with *pūjā* proper with all its parts including bathing, *sandhyā*, etc.

*Colophons of the different chapters:—*

16B, इति श्रीप्राणपत्युपाध्यायविरचितेऽर्चनसंग्रहे गुरुपदार्थादिप्रकाशो नाम प्रथमो विवेकः ।

50A, ॰दीक्षाप्रकाशो नाम द्वितीयो विवेकः ।

80B, ॰पुरश्चरणप्रकाशो नाम तृतीयो विवेकः ।

Of the works (which include a large number of later compilations) and authors referred to, mention should be made of:—

कुलधर्म्मोत्तर (16A), कौमुदी, विश्वसार (16B), विश्वविवेक (17A, 29A), विष्णुकल्प (17B), मत्स्यसूक्त, विष्णुपूजा (20B), सम्मोहनतन्त्र (21A), विश्वप्रपञ्च (25B), नवरत्नेश्वर (25A), राघवभट्ट (27B), ताराभक्तितरङ्गिणी (28A), प्रपञ्चतत्त्व (28A), सोमशम्भु (28B), विशुद्धेश्वर (29A), भवपञ्चक (29A), स्वतन्त्र (32B), विष्णुयामल (33A), रामार्चनचन्द्रिका, गणेशविमर्शिनी (33B), तत्त्वसार (34A), तन्त्ररत्न (36B), मालिनीविजय (38B), श्रीक्रम (39B), चामुण्डा (40A), कुमारीकल्प, बीजावलि (42A), उदयकरपद्धति, बृहत्मत्स्यसूक्त (44B), योगावली (45B), पुरश्चरणचन्द्रिका (46B), कुलप्रदीप, श्यामारहस्य (49A), विवेकप्रकाश (50B), पिङ्गला (51B), कुलप्रकाश (54A), हंसपरमेश्वर (55A), योगकल्प (55B), बृहत्प्रचेताः (56B), सनत्कुमारकल्प, क्रियासार (57A), सारावली (57B), सिद्धसारस्वत (59A), सिद्धान्तशेखर (60B), चित्रशक्तिरत्न (67B), गुणविष्णु (69A), गार्ग्यसंहिता, यक्षार्णव (69B), महायक्षार्णव (72B), शक्तिरत्न, कुलरत्न (73B), प्रश्नार्णव (74A), कुलप्रपञ्च (74B), रत्नकल्प, पूजार्णव (75B), विद्यानन्दकृतागम (76A), कुलप्रदीप (76B), पुरश्चरणप्रदीप (77A), विद्याधराचार्य (79A), साधनार्णव (79B), गुरुरत्नकल्प (81B), रत्नसार, कुलामृतसार (84A), कल्पद्रुम (84B), विश्वप्रकाश (85A), लक्ष्मीश्वागमार्णव (85B), रत्नप्रदीप (88A), आगमकल्पद्रुम (90B), तत्त्वसागर, कुलदर्पण (91A), रत्नसारावली, विश्वविभूति (91B), सारसंग्रह, रहस्यसार (92B), बृहद्गौतम (93B), चन्द्रिका (97B), गणेशतत्त्व (98B), कालीहृदय (100B), कुमारसंहिता (107A), लक्षणसंग्रह (108B), भावचूडामणि (109A), विद्यानन्दनिबन्ध (111A), मन्त्रकौमुदी (111A), शाक्तानन्दतरङ्गिणी (112B), तन्त्रप्रदीप (113A), सङ्केताभिधान (115B).

## 6213.

**Rāmakṛṣṇa.**

720. **आगमकौमुदी ।** *Āgamakaumudī.*

Substance, palm-leaf. 14 × 1½ inches. Folia, 112. Lines, 4 on a page. Extent in ślokas, 1,848. Character, Bengali. Date, 1621 Ś.E. Appearance, old, worm-eaten and dilapidated. Complete.

The present MS has been described in L. IV. 1549. The work deals with Tantra rites in general as also with the worship of various deities.

*Post-colophon Statement :—*

त्रिंशेंऽशे मधुमासस्य शुक्लषट्सु-मिते शके ।
श्रीमान् प्रसादः सुकृती लिलेखागमकौमुदीम् ॥

## 6214.

**Raghunātha Tarkavāgīśa.**

1611. **आगमतत्त्वविलासः ।** *Āgamatattvavilāsa.*

Substance, country-made paper. 19½ × 4½ inches. Folia, 481, of which Fol. 11–18, 418-19 and 422-23 are missing. Lines, 8 on a page. Extent in ślokas, 14,400. Character, Bengali. Appearance, fresh. Complete in five chapters.

This is an extensive Tantric digest dealing with general matters like initiation, yoga, etc., as also with the worship and rituals of various deities. A MS of the work, containing what is stated to be the first *khaṇḍa* is described in L. IX. 3186. Another MS, complete in five chapters, has been described in HPR. I. 22. An abridgment, made by the author's son, Rāmakṛṣṇa, in 1725 Ś.E., is noticed in L. I. 269 and VSP (p. xvii). The present MS gives the genealogy of the author and the date of composition of the

work in the verses given below. A portion of the work is reported to have been published in Benares (BM, 1908–1919, p. 831). Another work of the same author is the *Sāṅkhyatattvavilāsa*, a commentary on the *Sāṅkhyakārikā* (CS. III. 12, Hall, p. 6).

यः सर्व्वानन्दमिश्रात् समजनि बलभद्राभिधानस्ततोऽभूत्
काशीनाथस्तदीयतनुजनुरवनिभूषणं चन्द्रवन्द्यः ।
तस्मादासीत् कुलीनः सुकविरधिगताशेषशास्त्राब्धिपारः
सारः सद्योगभाजां शिव इव शिवरामाभिधश्चक्रवर्त्ती ॥
यं प्रासूत सुतं कुमारमिव सद्गोत्रोद्भवा पार्व्वती
धीरं श्रीरघुनाथमाततमहाशक्तिं दयालोः शिवात् ।
यश्चास्तत्कृतिनिर्म्मितो ग्रहवियत्षट्चन्द्रशाके मधौ
श्रीमांस्तत्र विलास एष कृतिनां हर्षाय पूर्णोऽभवत् ॥

## 6215.

**Keśava Viśvarūpa.**

### 907. आगमतत्त्वसंग्रहः । *Āgamatattvasaṃgraha.*

Substance, country-made paper. $12\frac{1}{4} \times 4\frac{3}{4}$ inches. Folia, 16. Lines, 12 on a page. Extent in ślokas, 900. Character, Nāgara. Appearance, old. Incomplete.

The present MS, which contains only the second chapter of the work, has been described in L. V. 1760. The chapter gives an indication of the principal topics of the Tantras (*meyaprakāśaka*).

*Works and authors quoted and referred to:—*

1B, परमानन्द ; स्वच्छन्द ; मालिनीविजय ; शिवसूत्रादिशैवतन्त्रतन्मूलक-तन्त्रालोकस्वच्छन्दोद्योतश्रीप्रत्यभिज्ञादिनिबन्ध ; ज्ञानार्णव-दक्षिणामूर्त्तिसंहिता-परमानन्दवामकेश्वरादि-कतिपयशास्त्रतन्त्रतदनुबद्धकतिपयनिबन्ध ; योगिनीतन्त्र ;

2A, त्रिपुरारहस्य; 3A, सौभाग्यरत्नाकर; त्रिपुरार्णव; सेतुबन्ध; रामकेश्वर-तन्त्र; 3B, स्वतन्त्र, कुलार्णव, परशुरामसूत्र; दत्तात्रेय; 4A, परशुरामसूत्र-वृत्ति; ताराभक्तिसुधार्णव; 4B, नित्यातन्त्र; नित्याटकाख्यागमव्याख्यानतन्त्रालोक, जयरथाचार्य्य; 5A, वरिवस्यारहस्य; नारदपञ्चरात्र; 6A, अनुत्तरागम; श्रीविद्यागम; 6B, सर्व्वदर्शनसंग्रह; सूतसंहिता; 7A, श्रीविद्यारत्न; वायु-संहिता; श्रीभगवत्पादाचार्य्य; आनन्दलहरी; 7B, विरूपाक्षपञ्चाशिका; अजडप्रमातृसिद्धि; तन्त्रसौभाग्यसार; 11A, प्रपञ्चसार; पद्मपादाचार्य्य; तन्त्रराज; 11B, अभिनवगुप्त; शैवागम; श्रीपादसूत्र; श्रीस्कन्द; राम-कण्ठाचार्य्य; ज्ञानार्णव; तन्त्रराजव्याख्या; प्रपञ्चसारविवरण; 12B, म्रगेन्द्र; 13A, शिवसूत्र; 15B, चण्डीस्तव; 16A, सौभाग्यकल्पलता; 16B, सौभाग्यकल्पतरु।

*Date and account of the author:—*

16B. जयति महागुरुवर्य्यो महागमज्ञानदुग्धवाराशिः।
सौभाग्यकल्पतरुहृन्निर्म्माता माधवाख्यया प्रथितः ॥ ६ ॥
तच्चरणाम्बुजचरणाराधनसम्प्राप्तवैभवो जयति।
क्षेमानन्दाख्यगुरुर्यस्य निबन्धो हि कल्पलतिकाख्यः ॥ ७ ॥
तच्चरणसेवको यशोपाख्या यस्य विश्वरूप इति।
म[हा]राष्ट्रान्वयसूतिः केशवशर्म्मा मुदे सुविबुधानां ॥ ८ ॥
रामाश्विनन्दवारिधिगतकल्यब्दे सितोर्ज्जपञ्चम्यां।
इममागमतत्त्वानां संग्रहमकरोन्महार्थदं विप्रदम् ॥ ९ ॥

*Colophon:—*

इति श्रीतुङ्गभद्रोपकूलवसति-विश्वरूपोपाख्य-केशवकृतावागमतत्त्व-संग्रहे द्वितीयः परिच्छेदः ॥

## 6216.

Rājakiśora.

### 3478. शक्तिरत्नाकरः। *Śaktiratnākara.*

Substance, machine-made modern paper. 14¼ × 4½ inches. Folia, 1–26 + ‡‡ + 114. Lines, 9 on a page. Character, Bengali. Appearance, soiled. Incomplete.

The name of the compiler is clearly given in the last introductory verse of the present MS:—

> 2A, तस्याः किञ्चिदहं समस्तजगतां सारैकशक्तेः क्रिय-
> न्नागातन्त्र-पुराण-पुस्तकवरादाकृष्य चामोदतः ।
> कुर्व्वे पुस्तकमेव रम्यवचनं श्रीशक्तिरत्नाकरं
> श्रीमान् राजकिशोर एष गिरिजापादाब्जमत्तव्रतुकः ॥
> [शक्त्याधारगणादपद्मविभवं श्रीराजकैशोरकम्—Oxf.]

Two MSS of the work, complete in five ullāsas, are described in L. I. 242 and Oxf. 101[a]. The present MS contains the first three chapters of the work and the concluding portions of the fourth and the fifteenth chapters. The first three chapters speak of the greatness of Śakti. The portions of the other two chapters deal respectively with the list of mahāvidyās and with rites to be performed when one fails to properly kill an animal offered to the deity.

## 6217.

### Navamīsiṃha.

### 5457. तन्त्रचिन्तामणिः । *Tantracintāmaṇi.*

Substance, country-made paper. $12\frac{3}{4} \times 6\frac{1}{2}$ inches. Folia, 412. Lines, 11–15 on a page. Extent in ślokas, 15,000. Character, Nāgara. Appearance, old and discoloured. Complete in 40 chapters.

*Beginning, containing a description of the contents and an indication of the works consulted:—*

> यस्याः कृत्स्नमिदं कुलाकुलगतं तत्त्वेन सम्पादितम्
> भूतं यस्सरसोज्ज्वलञ्च निगमाश्चत्वार एव क्रमात् ।
> भूताद्यं किल सागरेण सहितं नित्यं जगन्मङ्गले
> तस्मै साधकसिद्धिदानविमलप्रख्यातकीर्त्त्यै नमः ॥

वन्दे ज्ञानवरप्रदाननिरतं पादारविन्दं गुरो-
र्दिव्यौघप्रभृतेश्च विघ्ननिचयध्वंसैकलम्बोदरम् ।
तन्त्राणां रचनाकरं पशुपतिं गुह्येश्वरीं कालिकां
ब्रह्मोपेन्द्रमहेन्द्रवन्दिततरां वज्रादिकां योगिनीम् ॥
नेपालाधिपतेः समस्तधरणीशानीन्द्रचूडामणे-
र्नानादानतपोव्रतादिकविताशीलस्य विद्यानिधे[ः] ।
भूपालेन्द्रधराधिपस्य नवमीसिंहस्त्वमात्यः क्रमं
निर्णीयात्र बुधैः समं वितनुते श्रीतन्त्रचिन्तामणिम् ॥
चेद्ग्रन्थगात्रवधियात्र निगूढगुप्तिः
कार्य्या तदा बुधजने मम मुग्धता स्यात् ।
तस्माद्रहस्यकथनं ध्रुवमस्ति लोके
प्राकट्यदोषशमनं कुरु देवि मातः ॥
हे धीराः परमार्थदत्तमनसः सिद्धिं परामीप्सवः
तत्तद्दैवतसद्रहस्यमखिलं ज्ञातुञ्च चेदुत्सुकाः ।
तत् पश्यन्तु भवन्त एवममलं ग्रन्थं मदीयं मुहु-
र्नानातन्त्रविलोकनोत्सुकतया नायासयध्वं मनः ॥
तन्त्राणां वचनं येषां ग्रन्थेऽस्मिन् प्रकटीकृतं ।
तेषां नामानि तन्त्रस्य उत्प[ि]त्तकथनं पुनः ॥
कृतादियुगभेदेन मार्गा एव पृथक् पृथक् ।
आधिक्यमागमानाञ्च स्वच्छुत्पत्तिक्रमस्ततः ॥
कालिकाकृष्णयोस्तारारामयोश्चैकरूपता ।
निर्णयो दशविद्यायाः शिवशक्त्योरुपासना ॥
श्यामायाः सर्व्वमूलत्वमुक्तमाद्ये प्रकाशके ।
मन्त्रोद्धारक्रमेणैव वामदक्षिणलक्षणम् ॥
विद्यास्वाम्नायके मार्गनिर्णयश्च पृथक् पृथक् ।
आवश्यको मकारेषु चाम्नायाधीनतस्तु यः ॥
गुरुं विना तन्त्रमन्त्रे नाधिकारिनिरूपणम् ।
दीक्षाप्रशंसा गदिता द्वितीये तु प्रकाशके ॥

श्रीगुरोः शिवतुल्यत्वं गुरुलक्षणनिर्णयौ ।
गुरुं शिष्योपदेशौ च स्त्रीणां वामे स्वनायकात् ॥
लक्षणालक्षणे शिष्ये तयोराम्नायनिर्णयः ।
ग्राह्याग्राह्यविवेकः स्यादुपदेशान्तरं तयोः ॥
वैदिकादिषु मन्त्रेषु स्त्रीशूद्रौ नाधिकारिणौ ।
जातेर्मनोश्च विप्रादौ देयादेयविवेचना ॥
एतेषां संस्थितिर्ज्ञेया प्रकाशे(के) तु तृतीयके ।
तुर्य्यप्रकाशे संस्काराः षोडशैव तु मन्त्रिणः ॥
तत्र नामप्रदानाख्ये चक्राणां लिखनं कृतम् ।
मन्त्राणामपि संस्काराः षोडशैव प्रचोदिताः ॥
मध्ये शापप्रदानन्तु पञ्चमे च प्रकाशके ।
मासादिनिर्णयः षष्ठप्रकाशे तु प्रकीर्त्तितः ॥
दीक्षाविधिर्धना(ष्णा)द्यादौ परीक्षाग्रहणे भुवः ।
वास्तुयागविधेरादौ तस्योत्पत्तिः प्रकीर्त्तिता(ः) ॥
तन्मण्डलस्य शास्त्रोक्तं तत्र देवविनिर्णयः ।
बलिमन्त्राश्च तन्त्रोक्तवास्तुमण्डलदैवते ॥
प्रकाशे सप्तमे प्रोक्तिं चाष्टमेच निगद्यते ।
दिक्साधनं मण्डपस्य कुण्डादेर्लक्षणानि च ॥
अङ्कुरारोपणं प्रोक्तं नवमे तु प्रकाशके ।
गुरोर्निमन्त्रणविधिर्दन्ते काष्ठशुभाशुभम् ॥
स्वप्नं सम्प्रार्थनविधिर्वह्नि[ः] स्थितिविवेचनम् ।
कुण्डसंस्कारपूर्व्वं हि वह्निसंस्थापनं पुनः ॥
दीक्षाया दिनकृत्यं हि तदङ्कुरवनं ततः ।
मन्त्रप्रदाने भेदोऽस्ति वामदक्षिणमार्गयोः ॥
उपदेशः कुलस्त्रीणां दीक्षाभेदोपदेशको ।
उपासनाविधिः स्वप्नलब्धमन्त्रस्य निर्णयः ॥
मनोर्गुरोश्च देवस्य त्यागो दशप्रकाशके ।
क्रमदीक्षाविधिर्विद्याविशेषे परिकीर्त्तिता ॥

पूर्णाभिषेककथनं एकादशप्रकाशके ।
गुरुभक्तिस्तथाचारौ प्रोक्तौ दक्षिणकौलयोः ॥
धर्म्माधिकारिणौ कौले वामे चार्कप्रकाशके ।
आचारा दशधा(ः) प्रोक्ता महाचीनादयः क्रमात् ॥
श्यामादिविद्याविषये त्रयोदशप्रकाशके ।
दिव्यवीरपशूनाञ्च भावा बालाप्रपूजने ॥
योग्यायोग्यविवेकोक्ति चतुर्दशप्रकाशके ।
सात्त्विकादिप्रभेदेन पूजा भिन्ना प्रकीर्त्तिता ॥
पृथक् मोक्षप्रदं कर्म्म प्रातःकृत्यविधिस्ततः ।
अजपाया विधानञ्च स्नानं नानाविधं स्मृतम् ॥
विभूतिधारणं सन्ध्यावन्दनञ्च क्रमात् पुनः ।
गायत्रीणां समुद्धारः प्रकाशे तिथिसङ्ख्यके ॥
पूजाप्रशंसा द्वारार्च्चासनं भूतापसारणम् ।
भूतशुद्धिर्मातृकादिः कलासङ्ख्याप्रकाशके ।
अन्तर्यजनकर्म्माणि चार्घ्यादिस्थापने विधिः ॥
द्रव्याणि यन्त्रलिखने पीठनिर्णयमेव च ।
शालग्रामशिलायाश्च उत्पत्तिर्लक्षणानि च ॥
हरीशाम्बिसुतासूर्य्यगणेशादिकृपतिग्रहाः ।
एतेषां भेदतो भेदः सम्यगुक्तः पृथक् पृथक् ॥
मुद्रा सर्व्वोपचारेषु प्रत्येकं लक्षणादिकम् ।
नित्यहोमविधिर्भूतबलिश्चाराचिकं ततः ॥
देवताभेदतो भिन्ना करमाला प्रचोदिता ।
लक्ष्यार्पणादिकं सर्व्वं सप्तदशप्रकाशके ॥
कुलमार्गसमुत्पत्तिः पञ्चशुद्धिविधिस्ततः ।
शक्तिशुद्धिस्तु कौलादेर्विशेषन्यासनिर्णयः ॥
द्रव्यदानविवेकस्तूत्पत्ति[ः] पापकर्म्मणः ।
मांसादेर्निर्णयः सम्यक् मकारस्यानुकल्पकम् ॥

आन्तरीयविशेषस्तु संस्कारकथनं क्रमात् ।
पात्रसंख्याप्रकथनं मानश्रेष्ठादिनिर्णयः ॥
म(ा)हापात्रस्य च पुनः साधनं लक्षणं शुचिः ।
श्रीपात्रस्थापनादिश्च तर्पणं तत्त्वशोधनम् ॥
वटुकादिबलिश्चाष्टादशमेतिप्रकाशके ।
पूजोपचारमन्त्राश्च कुलद्रव्यनिषेवणम् ॥
ऊनविंशतिसंख्येऽस्मिन् प्रकाशे प्रकटीकृतम् ।
भोजनादिविधिः साय(ा)न्तनीयकृत्यलेखनम् ॥
शिवाबलिर्निशाकृत्यं नित्यभेदविनिर्णयः ।
लिखितो विंशतितमे प्रकाशे सर्व्वसम्मते ॥
श्यामापूजाक्रमस्त्वेकविंशत्याख्यप्रकाशके ।
स्तोत्रादिलिखनं सम्यक् द्वाविंशतिप्रकाशके ॥
म(ा)हाकालादिनित्यानां मन्त्रोद्धारादिकं पुनः ।
त्रयोविंशतिसंख्येऽस्मिन् प्रकाशे प्रकटायते ॥
तारार्चनक्रमो वेदविंशत्याख्ये प्रकाशके ।
प्रचण्डचण्डिकापूजा पञ्चविंशतिसंख्यके ॥
श्रीविद्यायाः क्रमः सम्यक् षड्विंशतिप्रकाशके ।
भैरवी च महालक्ष्मीर्मातङ्गी भुवनेश्वरी ॥
धूमावती च बगला चासां पूजा पृथक् पृथक् ।
सप्तविंशतिसंख्येऽस्मिन् प्रकाशे प्रतिपादिता ॥
चक्रपूजा पूर्व्वकृत्यं सामग्रीलक्षणं ततः ।
द्विविधं यजनं तत्र दूतीनां लक्षणं पृथक् ॥
दशविद्याक्रमेणैव दूतीयागविधिस्ततः ।
चक्राचारः कृतोऽष्टाविंशत्याख्यप्रकाशके ॥
प्रस्तारादिश्च यन्त्राणां क्रमाद्दक्षिणवामयोः ।
प्रतिष्ठा द्विविधा प्रोक्ता ऊनविंश(ति)प्रकाशके ॥
चलाचला द्विधा माला देवताम्नायभेदतः ।
पृथक् पृथक् दशा प्रोक्ता रुद्राक्षसम्भवादिकम् ॥

मन्त्राशङ्खादिभिर्भिन्ना मालाफलविनिर्णयः ।
ग्रथनादिविवेकस्तु संस्कारा मुखसाधनम् ॥
मन्त्रमालाविनिर्म्माणं संस्कारौ मुख्यभेदयोः ।
जाग्रतीकरणं तस्यां प्रोक्तं त्रिंशत्प्रकाशके ॥
कालस्यार्थस्तलोऽङ्गानि पुरश्चरणकर्म्मणः ।
विघ्नराजविधिर्विद्याविशेषाम्नायनिर्णयः ॥
क्रमेण दशविद्यायाः जपसंख्यादिनिर्णयः ।
सर्व्वसिद्धिप्रदं स्थानं देवतानां पृथक् पृथक् ॥
पीठानाञ्च समुत्पत्तिः क्षेत्रस्य ग्रहणे विधिः ।
कूर्म्मचक्रपरिज्ञानमभिषेकविधिस्ततः ॥
कार्य्याकार्य्यविचारश्च सङ्कल्पकरणं ततः ।
जपस्य कालकथनं रहस्यमनुसूतके ॥
मन्त्रविद्याविभेदेन प्रबोधकालनिर्णयः ।
तयोर्भेदो मन्त्रशिखामन्त्रचैतन्यकं ततः ॥
क्रमेण दशविद्याया कुल्लुकाविधिरीरितः ।
सेतुविप्रादिभेदेन निर्व्वाणकथनं ततः ॥
प्राणोत्कीलनयोर्भेदः प्राणोद्धारोसिना मनोः ।
मन्त्रस्य हृदयं चार्थनिर्णयोत्र विशेषतः ॥
जपस्यारम्भभेदा हि पुनर्वीरपुरस्क्रिया ।
अथवान्यप्रकारेण विविधा तु पुरस्क्रिया ॥
शावस्य च स्तोत्रादेश्चैकत्रिंशत्प्रकाशके ।
मन्त्रसिद्धेरुपायाश्च चितासाधनकर्म्म च ॥
वीरसाधनभेदाश्च युग्मत्रिंशत्प्रकाशके ।
जपसंख्याप्रमाणञ्च युग्मत्रिंशत्प्रकाशके ॥
विद्याभेदे जपात् सिद्धिप्रदा संख्या मनोरपि ॥
रहस्यक्रमयोगाश्च त्रयस्त्रिंशत्प्रकाशके ।
नैमित्तिकस्य कालादि कुलाकुलविनिर्णयः ॥

ग्रहणं द्विविधं प्रोक्तं बाह्याभ्यन्तरभेदतः ।
दमनारोपणोत्पत्तिर्दमनारोपणे विधिः ॥
पवित्रारोपणोत्पत्तिः पवित्रारोपणे विधिः ।
शक्तिभेदो देवतायास्त्रयस्त्रिंशत्प्रकाशके ॥
शारदीयविधानञ्च चतुस्त्रिंशत्प्रकाशके ।
पशुदानविवेकश्च पशुभेदादिनिर्णयः ॥
देवताहस्तिकालञ्च पशोर्लक्षणवीक्षणम् ।
निषेधोऽप्यनुकल्पञ्च पूजामन्त्रश्च प्रोक्षणम् ॥
नराणां प्रोक्षणं खड्गलक्षणं पात्रनिर्णयः ।
शुभाशुभञ्च नैवेद्यं पञ्चत्रिंशत्प्रकाशके ॥
कुमारीपूजनविधौ तासां लक्षणनिर्णयः ।
शुभाशुभादिसंकेतः षट्त्रिंशत्प्रकाशके ॥
सामान्यतः काम्यविधिः षट्कर्मक्रमनिर्णयः ।
तेषां प्रकीर्णकथनं आसनादिनिरूपणम् ॥
मन्त्रग्रथनभेदादिर्मालाकुण्डादिनिर्णयः ।
होमद्रव्यप्रमाणञ्च सप्तत्रिंशत्प्रकाशके ॥
क्रमेण दशविद्यायाः प्रयोगश्च पृथक् पृथक् ।
प्रायश्चित्तविधिः पश्चादष्टत्रिंशत्प्रकाशके ॥
साम्राज्यमुद्रिका पश्चाद्यन्त्राणां लक्षणं क्रमात् ।
मन्त्राणां धारणायोनचत्वारिंशत्प्रकाशके ॥
प्रत्येकं मातृकावर्णध्यानादीनां निरूपणम् ।
क्रमेण दशविद्याया मन्त्रभेदाः प्रकीर्त्तिताः ॥
नानाप्रयोगमन्त्रास्तु चत्वारिंशत्प्रकाशके ।
कुमारी योगिनी काली वाराही कुब्जिका परा ॥
नारायणी मुण्डमाला चामुण्डा भुवनेश्वरी ।
गौतमी समया सौत्रामणिर्विजयमालिनी ॥
लीलावती गुह्यसिद्धिर्मालिनी परमेश्वरी ।
प्रपञ्चचण्डिकाशम्भू नित्या कात्यायनीति च ॥

पैतृकारौ भैरवौ भूतसिद्धिः सिद्धेश्वरौ तथा ।
मेरुनीलमतङ्गाश्च शक्तिसङ्गमभैरवौ ॥
साङ्ख्यायनं किरणाख्यं गन्धर्व्वभूतभैरवौ ।
वीरार्द्दनं वीरभद्रं रुद्रकालानलोत्तरे ॥
सिद्धिसारस्वतं हाहारावो मन्थानभैरवः ।
सिद्धेश्वरो विश्वसारस्तथा बौधायनं पुनः ॥
माहेश्वरमहाहारौ कालाग्निश्च रुदा[द्रा ?]व्यपि ।
एतेषामन्ततो ज्ञेयस्तन्त्रशब्दः पृथक् पृथक् ॥
सिद्धिनाथो महाकालो दक्षिणामूर्त्तिरेव च ।
सुरेन्द्रब्रह्मगोरक्षा वैशम्पायनमेव च ॥
नन्दिकेश्वरवायव्यौ वाराही शाम्भवीति च ।
सनत्कुमारः श्रीकण्ठोऽप्यगस्त्यस्तत्त्वसारकौ ॥
वशिष्ठः पुनरेतेषां अन्ते स्यात् संहिताभिधा ।
ब्रह्मविष्णुरुद्रसिद्धदेवुमाचन्द्रशक्तयः ।
एतेषामन्ततो ज्ञेयं यामलं चाष्टसंख्यकम् ॥
कुलवीरमन्त्रभावचूड़ामणिभिरीरितः ।
हयग्रीवनारदाभ्यां महाकपिलतो भवेत् ॥
पञ्चरात्रं ततो देवी शैवलिङ्गागमानि च ।
कुमारीविजयाकालीताराकल्पाश्च विश्रुताः ॥
मातृकामन्त्रधानानि कुलगुप्ता कुलानि च ।
मायाचैतेभ्यः शब्देभ्योऽप्यर्णवं परिकीर्त्तितम् ॥
रहस्यक्रमतः कल्लोलिनीश्रीमतकालयोः ।
उत्तरश्च पदं ज्ञेयं चण्डीपीठं प्रकीर्त्तितम् ॥
नित्याह्निको मातिलके चोडीशं कुलपूर्व्वकम् ।
स्वायम्भुवः सोमशम्भुस्तथैव पिङ्गलामतम् ॥
षडन्वयो महारत्नवरत्नेश्वरावपि ।
कामधेनुमतं कुम्भकुलसम्भवसंज्ञकौ ॥

कालीक्रमो मत्स्यसूक्तमुदयाकरपद्धतिः ।
योगिनीहृदयञ्चैव कालीहृदयमेव च ।
चिन्तामणिरत्नकं सोमभुजङ्गावलिरेव च ॥
कुलावतारकं पञ्चवाराहीश्वरपूर्व्वतः ।
गौरीसंवादकं चेयं समयाङ्कमातृका ॥
दुर्गायागञ्च ललितस्वच्छन्दं परिकीर्त्तितम् ।
कुलप्रकाशकञ्चेति कुलामृतप्रदायिका ॥
नवदुर्गाकल्पसंज्ञं कुलमूलावतारकम् ।
तन्त्रराजञ्च कामाख्या शब्दान्तं चासिका स्मृता ॥
कुलरत्नद्योतिकं स्यादेतेभ्यः ग्रन्थमध्यतः ।
वचनानि समानीय लिख्यते क्रियते न तु ॥

*End*:—

तन्त्राणि [यानि] न सकलानि न तानि [म]र्त्ये
मर्त्ये च यानि न पुनः प्रकटानि तानि ।
देशान्तरे कति कतीह न सर्व्वमस्ति
ग्र[न्थे त्व]पूर्ववचने किमु दूषणं मे ॥
एकस्याः पदपद्मपूजनविधिर्निःशेषतो निर्णये
शम्भुः पञ्चमुखोप्यनेकक[वपु]र्न्मल्पञ्जयो न क्षमः ।
दिग्विद्याक्रम(ण)निर्णयोचिततया ग्रन्थे प्रवृत्तोऽस्मि य-
त्त[त्राद्य]ल्पतरं कृतं बुधजनैः क्षन्तव्यमेतद्ध्रुवम् ॥

*Last Colophon*:—

इति श्रीतन्त्रचिन्तामणौ मातृकावर्णध्यानदशविद्यादिनानामन्त्र-
भेदमुक्त्युपायान्त्येष्टिनिर्णयनामा चत्वारिंशत्तमः प्रकाशः सम्पूर्णः ।

*Post-colophon Statement*:—

समाप्तश्चायं दामोदरसूरिणा कृतो ग्रन्थः ।

This is a comprehensive Tantric compilation dealing with the details of Tantric worship. The name of the author is found in one of the introductory verses while the post-colophon statement of the present MS attributes the work to Dāmodara Sūri.

## 6218.

### 11311. *Tantracintāmaṇi.*

Substance, country-made paper. 13 × 6¼ inches. Folia, 1–411. Lines, 11 on a page. Extent in ślokas, 15,000. Character, Nāgara. Appearance, fresh. Complete in 40 chapters.

A complete table of contents is given in the beginning of the MS in Folia marked 1–15.

## 6219.

**Yadunātha Śarmā.**

### 3982A. आगमकल्पवल्ली । *Āgamakalpavallī.*

Substance, country-made paper. 9¼ × 6½ inches. Folia, 10. Lines, 22 on a page. Extent in ślokas, 350. Character, Kashmiri. Appearance, old, worn out and discoloured. Incomplete.

MSS of the work are noticed in Oudh. XI. 20 and Stein. 227. A MS of the work, complete in 25 chapters, is in the Society's old collection. It is a comprehensive compilation dealing with the details of the worship of various deities, specially the Mahāvidyās. The present MS contains the first two chapters and a portion of the third chapter up to the beginning of the Nāḍīcakra.

*Beginning:—*

ॐ स्वस्ति । श्रीगणेशाय नमः । ॐ नमः शिवाय ।

यत्पादपङ्कजयुगं हृदि सन्निवेश्य
विश्वं सृजत्यविकलं खलु पद्मजन्मा ।
विष्णुश्च पालयति संहरते महेश-
स्तं देवमादिपुरुषं सततं नतोऽस्मि ॥

नत्वा गिरीशं गिरिजां गणेशं वाणीं मुनीन्द्रैः स्तुतपादपद्माम् ।
विलोक्य शास्त्रं यदुनाथशर्म्मणा वितन्यते ह्यागमकल्पवल्ली ॥
प्रपञ्चसारसिद्धान्तं शारदातिलकं तथा
सपरिष्कारमालोक्य तथा सारसमुच्चयम् ।
यत्नेन दीपिकां दृष्ट्वा तथा च लघुदीपिकाम्
तथा पूजाप्रदीपञ्च पुरश्चरणचन्द्रिकाम् ॥
मन्त्रदर्पणसिद्धान्तं मन्त्रदेवप्रकाशकम् ।
मन्त्रनेत्रञ्च मन्त्रान्तं श्रीरामार्चनचन्द्रिकाम् ॥
मन्त्रमुक्तावली रत्नावली ज्ञानार्णवादिकान् ।
तन्त्रं सनत्कुमारस्य नारदीयचतुश्शतीम् ॥
पूजायां सोमशम्भुमतं चागस्त्यसंहिताम् ।
संहितां वैष्णवीं तद्वत् तत्त्वसागरसंहिताम् ॥
संहितां कपिलप्रोक्तां श्रीमन्त्रवरसंहिताम् ।
तन्त्रं श्रीभुवनेश्वर्य्यां नयसिद्धान्तमादरात् ॥
कल्पं श्रीवनदुर्गायास्तन्त्रं सम्मोहनादिकम् ।
हयग्रीवमतं तद्वत् तथा विज्ञानभारतम् ॥
गुह्यं च तन्त्रराजं च तथा वै पिङ्गलामतम् ।
वामकेश्वरतन्त्रञ्च समस्तं रामदीक्षितम् ॥
विद्यानेश्वरसिद्धान्तसारं श्रीसंहिताक्रमात् ।
विद्यामललितं पञ्चरात्रं नारायणीमपि ॥
वशिष्ठसंहितागस्त्यसंहितां भैरवं तथा ।
दिव्यसारस्वतं चिच्चन्द्रिकां कामिकमादरात् ॥
होमाकरोत्तरं ग्रन्थं प्रतिष्ठासारसंग्रहम् ।
संहितां वायवीं तद्वत् संहितां [ब्र]ह्मणस्तथा ॥
कश्यपोः संहितां ब्रह्मविष्णुकक्षादियामलम् ।
तथैव यामलोद्धारं मत्स्यसूक्तमपि क्रमात् ॥
पार्व्वतीश्वरसंवादं वाराहीतन्त्रमादरात् ।
तथैव कुब्जिकातन्त्रं [त्व]रिताद्यागमादरात् ॥

तथैव योगिनीतन्त्रं क्रमशक्तिपुराश्रयम् ।
ईशानसंहितां तद्वत् सिद्धान्तं विश्वकर्मणः ॥
तन्त्रं श्रीदक्षिणामूर्त्तेः वैशम्पायनसंहिताम् ।
कुलचूड़ामणिं तद्वत् भावचूड़ामणिं तथा ॥
कुलार्णवं कुलश्रेष्ठं हंसपारायणं तथा ।
पुराणं विविधं तद्वत् स्मृतिशास्त्राणि भारतम् ॥
ज्योतिःशास्त्राणि चालोक्य सकलां पद्धतिं क्रमात् ।
अन्ये ये सद्ग्रन्थाः सन्ति तान् दृष्ट्वा च पुनः पुनः ॥
विधानं मन्त्रयन्त्राणां दीक्षादीनां प्रपञ्चितम् ।
ज्ञानानुसारतो ह्येयं विभाव्य च मुहुर्मुहुः ॥

*Colophons:—*

2B, इत्यागमकल्पलतायां प्रथमः पटलः; 5B, इत्यागमकल्पलतायां द्वितीयः पटलः ।

## 6220.

**Yogendra.**

2897. **आगमसारसंग्रहः ।** *Āgamasārasaṃgraha.*

Substance, country-made yellow paper. 17 × 4 inches. Folia, 5. Lines, 10 on a page. Extent in ślokas, 167. Character, Bengali. Appearance, fresh. Incomplete.

The present MS, which has been described in L. X. 4050, contains the first two chapters of the work which speak of the omnipresence and supremacy of Śakti as well as the greatness of the Kaula form of worship.

Of the works quoted and referred to, mention may be made of the following:—

कामधेनुतन्त्र, ज्ञानार्णव, कौलावलि, कुमारीकल्प, कणादसंहिता, लिङ्गार्चन, वासुदेवरहस्य, विश्वसार, वराहसंहिता, भूतशुद्धितन्त्र, गुरुपादुका, चिन्तामणितन्त्र, उत्तरातन्त्र, कौमुदीतन्त्र, कुलार्णव, योगाचार ।

## 6221.

**Kāśīnātha.**

6542. **अवतारभेदप्रकाशिका ।** *Avatārabhedaprakāśikā.*

Substance, country-made paper. 10¼ × 3¼ inches. Folia, 17. Lines, 7 on a page. Extent in ślokas, 300. Character, Nāgara. Appearance, fresh. Complete.

The title as well as the name of the author are found in a later hand on the reverse of Fol. 1 as also at the end of the work where the title is given as निखाद्यवतारभेदप्रकाशिका. The work gives an account of some of the religious sects of the Hindus, describes the origin of various deities including some of the Mahāvidyās and some of the incarnations of Viṣṇu, and points out the characteristics of their worship.

*Beginning:—*

श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः ।

श्रीशक्तिसंगमतन्त्रे [I. 8. 38–50]

देव्युवाच ।

देवेश श्रोतुमिच्छामि विष्णुभेदान् शिवस्य च ।
वैखानसो भवेदादौ श्रीराधावल्लभो तथा ॥
गोकुलेशो महेशानि तथा वृन्दावनो भवेत् ।
पाञ्चरात्रं पञ्चमं स्यात् षष्ठः श्रीवीरवैष्णवः ॥
रामानन्दो हरिव्यासो निम्बार्कश्च महेश्वरि ।
ततो भागवतो देवि दश भेदाः प्रकीर्त्तिताः ॥
शिखी मुण्डी जटी चैव त्रिचिदण्डी क्रमेण च ।
एकदण्डी महेशानि वीरशैवश्चैव च ॥
सप्त पाशुपताः प्रोक्ताः दशधा वैष्णवा मताः ।
एतेषां वासनां देवि शृणु यत्नेन शाम्भवि ॥

वेवेष्टि सर्व्वं संव्याप्य यस्तिष्ठति स वैष्णवः ।
वैखानसादिदीक्षाद्यैः भूषितः स्मार्त्तवैष्णवः ॥
श्रीराधावल्लभं देवि शृणु यत्नेन शाम्भवि ।
वैष्णवाचारनिरतो विष्णुमन्त्रैकपारगः ॥
अनन्यचेताः शान्तात्मा विष्णुचिन्तपरायणः ।
श्रीराधावल्लभो देवि गोकुलेशं शृणु प्रिये ॥
नानाभूषणसम्पन्नो नानासौगन्धभूषितः ।
गवां कुलं पोषयिता कालीकृष्णस्वरूपधृक् ॥
शरीरमर्थप्राणाश्च तस्मिन्निवेदकारकं ।
अन्तःशक्तिपरो देवि बहिर्वैष्णवरूपधृक् ॥
गन्धर्व्वाचारनिरतो लताचेष्टनतत्परः ।
सम्प्रदायो गोकुलेशः सर्व्वसिद्धिकरो भुवि ॥
वृन्दावनाख्यं देवेशि शृणु यत्नेन साम्प्रतम् ।
विगताशः प्रसन्नात्मा विष्णुभक्तिपरायणः ॥
कामिनीसङ्गसम्पन्नो वनक्रीडाविनोदधृक् ।
सौगन्धभूषिततनुः स्त्रीध्यानैकपरायणः ॥
विष्णुस्वरूप्यतत्त्वज्ञः प्रोक्तो वृन्दावनी प्रिये ॥

## 6222.

## 6012. तन्त्रसिद्धान्तकौमुदी । *Tantrasiddhāntakaumudī.*

Substance, country-made paper. 12×5 inches. Folia, 6. Lines, 10 on a page. Extent in ślokas, 170. Character, Nāgara. Appearance, fresh. Complete in three chapters.

This work deals in short with the philosophy of the Tantras. Of the works and authors referred to, mention may be made of मृत्युजित्भट्टारक, विज्ञानभैरव (1B), प्रत्यभिज्ञा, स्वच्छन्द (2A), भर्गशिखा वीरावलि, मालिनीविजय (2B), कुलयुक्ति, मृत्युञ्जयभट्टारक, लक्ष्मीकौलार्णव (3A), ज्ञानार्णव, सर्वज्ञानोत्तर, तन्त्रसद्भाव, श्रीकण्ठीयसंहिता (4A) and देवीयामल (4B).

*Beginning:*—

श्रीगणेशाय नमः। श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः।

अनाद्यायाखिलाद्याय मायिने गतमायिने।

अरूपाय सरूपाय दक्षिणामूर्त्तये नमः॥

नत्वा श्रीशङ्कराचार्य्यचरणाम्भोजद्वयम्।

काशीनाथः प्रकुरुते तन्त्रसिद्धान्तकौमुदीम्॥

तत्र प्रथमं नरेश्वरभेदवादिप्रातिपक्ष्येण चैतन्यपरमार्थः शिव एव विश्वस्य आत्मा इत्यादिश्रुतिः। चैतन्यमात्मा। इत्यचेतितस्य कस्यापि सत्त्वाभावात् चितिक्रिया सर्व्वसामान्यरूपेति। चेतयतीति चेतनः सर्व्वज्ञानक्रियास्वतन्त्रस्तस्य भावः चैतन्यं सर्व्वज्ञानक्रियासम्बन्धमयं परिपूर्णस्वातन्त्र्यमुच्यते। तच्च परमशिवस्यैव भगवतोऽस्ति।

*End:*—

देहप्राणसुखादिभिः प्रतिकलं संरुध्यमानो जनः

पूर्णानन्दघनामिमां न चिनुते स्वादेश्वरीं स्वां चितिम्।

तां वै बोधसुधाब्धिविश्वमभितस्तत्फेनपिण्डोपमं

यः पश्यत्युपदेशतस्तु कथितः साक्षात् स एकः शिवः॥

*Colophons of the different chapters:*—

3B, इति श्रीमद्भडोपनामकजयरामभट्टसुत-वाराणसीगर्भसम्भव-काशीनाथविरचितायां तन्त्रसिद्धान्तकौमुद्यां शाम्भवोपायप्रदर्शनं नाम प्रथम-प्रकाशः; 5A, ०शाक्तोपायप्रदर्शनं नाम द्वितीयप्रकाशः; 6A, ०आणवोपायप्रदर्शनं तृतीयप्रकाशः।

## 6223.

### 6531. *Tantrasiddhāntakaumudī.*

Substance, country-made paper. $10\frac{1}{4} \times 6\frac{1}{4}$ inches. Folia, 8. Lines, 10 on a page. Extent in ślokas, 150. Character, Nāgara. Date, Saṃvat 1961. Appearance, fresh. Complete in three chapters.

*Post-colophon Statement:—*

श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः। सं १९६[१?] मौः श्रावण
वदौ १०। मालवीयबालमुकुन्दस्येदं पुस्तकम्।

## 6224.

6522. **मन्त्रसिद्धान्तमञ्जरी।** *Mantrasiddhāntamañjarī.*

Substance, country-made paper. 9¾ × 5 inches. Folia, 6. Lines, 8 on a page. Extent in ślokas, 70. Character, Nāgara. Date, Saṃvat 1961. Appearance, fresh. Complete.

The work which is divided into three sections gives in a general way the inner sense of *mantras*, as referring to the Supreme Being, speaks of different types of initiation meant for different rites and followers of different sects, and enumerates thirty-two kinds of shortcomings of human beings.

*Beginning:—*

श्रीगणेशाय नमः। श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः।
दक्षिणामूर्त्तिपादाब्जभ्रमरीभूतमानसः।
काशीनाथः प्रतनुते मन्त्रसिद्धान्तमञ्जरी[म्]॥
अथातः सर्व्वमन्त्राणां देवता ब्रह्म मायया।
प्रवर्त्तितं ब्रह्म तत्तु ब्रह्मेन्द्राग्न्यादिनामकम्॥
पृथक् पृथगुपाधिस्तु वस्तुतो ब्रह्म केवलम्।
निरास्पदं स्वसंवेद्यं सच्चिदानन्दलक्षणम्॥

... ... ... ... ...

मन्त्रेषु नाममात्रे तु सन्ति च हि विभक्तयः॥
तासामर्थः[र्थे?] प्रथम[त]स्तस्मा मन्त्रार्थ उच्यते।
यन्नाम्नः प्रातिपदिकं तेनात्मा ब्रह्म लक्ष्यते॥

2A, सर्वत्र चतुर्थ्यन्तपदे यत्प्रातिपदिकं तद्ब्रह्म।
नमः स्वाहादियोगेन ब्रह्मात्मैक्यं स्फुटं मतौ॥

*Colophon:—*

इति श्रीभडोपनामककाशीनाथविरचिता मन्त्रसिद्धान्तमञ्जरी समाप्ता ।

6225.

5911. वैदिकतान्त्रिकाधिकारनिर्णयः । *Vaidikatāntrikādhikāranirṇaya.*

Substance, country-made paper. 12 × 5 inches. Folia, 4. Lines, 10 on a page. Extent in ślokas, 100. Character, Nāgara. Appearance, fresh. Complete.

This work shows how particular classes of Tantras are meant for particular classes of worshippers. Of the works and authors referred to, mention may be made of विद्यारण्य (1B), पुरुषार्थप्रबोध (2A, B) and अनन्तभट्ट (3B), maternal grandfather of the author.

*Beginning:—*

श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः ।

अथ वैदिकतान्त्रिकादीनामधिकारनिर्णयः ।

शुद्धवैदिकः, तान्त्रिकवैदिकः, शुद्धतान्त्रिकः, वैदिकतान्त्रिकः, एते चत्वार आम्नायाः स्वस्वकर्म्मानुसारतः ।

मार्गाधिकारिणः प्रोक्ताः शिवेन परमात्मना ॥

तन्त्रगन्धं न सहते यः सोऽयं शुद्धवैदिकः ।

सतन्त्रांशश्रुतिप्रीतः प्रोक्तस्तान्त्रिकवैदिकः ॥

वेदगन्धं न सहते यः सोऽयं शुद्धतान्त्रिकः ।

सवेदाङ्गागमः प्रोक्तो योऽसौ वैदिकतान्त्रिकः ॥

वेदे वेदानुकूले च अधिकारी तु वैदिकः ।

तन्त्रोपसर्ज्जने शास्त्रेऽधिक[ा ?]तांत्रिकवैदिकः ॥

वेदगन्धासहे तन्त्रेऽधिकारी शुद्धतान्त्रिकः ।

वेदोपसर्ज्जने तन्त्रेऽधिकृद्वैदिकतान्त्रिकः ॥

श्रीमद्विद्यारण्यचरणास्तु ।

समूलमर्च्चितं यत्तु भागधेयं परात्परम् ।
शुद्धवैदिकमित्युक्तं विद्वद्भिः शुद्धवैदिकैः ॥
शिवराघवसंवादवायवीयादिकं बुधैः ।
वेदागमविभागज्ञैः प्रोक्तं तान्त्रिकवैदिकम् ॥
वेदमन्त्रासहं तन्त्रं सौरं पाशुपतादिकम् ।
शुद्धतन्त्रमिति प्रोक्तं वेदतन्त्रार्थकोविदैः ॥
पञ्चरात्रं भागवतं शैवसिद्धान्तसंज्ञितम् ।
सर्व्वमेतन्महाप्राज्ञैः प्रोक्तं वैदिकतान्त्रिकम् ॥
पाणिनीयं जैमिनीयं शास्त्रं वैयासिकं तथा ।
भाष्यं यद्भगवत्पादैः प्रोक्तं तच्छुद्धवैदिकम् ॥
अक्षपादीयकाणादकापिलानि तथैव च ।
पातञ्जलं च तत्सर्व्वं प्रोक्तं तान्त्रिकवैदिकम् ॥
शारदातिलकं तद्वत् मन्त्रदेवप्रकाशिका ।
प्रपञ्चसारं चाग्नेयं प्रोक्तं वैदिकतान्त्रिकम् ॥

*Colophon:—*

इति श्रीमद्भट्टोपनामकदक्षिणाचारमतप्रवर्त्तककाशीनाथेन विरचितः वैदिकतान्त्रिकाधिकारनिर्णयः समाप्तः ।

## 6226.

5910. **आगमोत्पत्त्यादिवैदिकतान्त्रिकनिर्णयः ।** *Āgamotpattyādivaidikatāntrikanirṇaya.*

Substance, country-made paper. 12 × 5 inches. Folia, 11. Lines, 10 on a page. Extent in ślokas, 330. Character, Nāgara. Appearance, fresh. Complete.

The work, which is called *Āgamotpattinirṇaya* in one of the introductory verses, concerns itself not only with a description of the origin of the Tantras and an enumeration of the important Tantric texts but incidentally gives

an account of various Tantric rites, especially the sacraments meant for a follower of the Tantras. It is presumably on account of the variety of topics dealt with that the work is called *Āgamotpattyādivaidikatāntrikanirṇaya* in the last colophon.

*Beginning:—*

श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः ।
अनन्ताख्यं गुरुं नौमि कवित्वप्रतिभाकरम् ।
शास्त्रवल्लीफलधरं स्फुरत्कीर्त्तिकरं परम् ॥
नत्वा श्रीदक्षिणामूर्त्तिचरणाम्भोरुहद्वयम् ।
काशीनाथः प्रतनुते आगमोत्पत्तिनिर्णयम् ॥

तत्र रुद्रयामले ।

देव्युवाच ।

त्राहि त्राहि महादेव शरणागतवत्सल ।
साहङ्कारा वयं मूढा ईश्वरा इति वादिनः ॥
महाकालः कथं ज्ञेयः कथं मुक्तिर्भवेच्छिव ।
मुक्तिः [च] कतिधा देव श्रेष्ठा का किञ्च साधनम् ॥
तदास्माकं यदि कृपा देव्यां विष्णौ सुरेषु च ।

ईश्वर उवाच ।

ज्ञायते तत्प्रभावेण सकलं वेदवाक्यतः ॥
वेदेभ्यः सारमुद्धृत्य यत्कृतं शङ्करेण वै ।
वेदाधिकतया देवि आगमः परिकीर्त्तितः ॥
आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखम् ।
मलत्रयविनाशित्वात् तस्मादागम उच्यते ॥
आगमोत्पत्तिसंख्ये च कथ्यते शृणु साम्प्रतम् ।
सार्द्धवर्षाष्टको ब्रह्मा यदा जातस्तु देवता ॥
अहंकारो महान् जातस्तत्र विद्याप्रभावतः ।
तदा तस्मिन् कलियुगे शिश्नोदरपरायणाः ॥

नादृतास्तैस्तु वेदादिस्मृतयो वै ह्यथागमे ।
खानं पानं मैथुनञ्च देशे देशे पुरे पुरे ॥
न कश्चिन्मन्यते विष्णुं गणेशं न रविं शिवम् ।
मत्वा सर्व्वं जगच्छान्तं भगपूजां प्रकुर्व्वते ॥
तदा वटुकरूपेण मया पृष्टः पितामहः ।
ब्रह्मणादिस्थितां धर्म्मों वयं येन तरेमहि ॥
तदा तु ब्रह्मणा प्रोक्तं ममोर्द्धमुखनिर्गतः ।
आगमः पञ्चमो वेदः भुक्तिमुक्तिप्रदायकः ॥
तदाद्य कलिसंधे तु मया प्रोक्तः पितामहः ।
ब्रह्मणेदं त्वया वाच्यं सृष्टिकर्त्ता सदाशिवः ॥
तदा पितामहेनोक्तं कर्त्ताहं चापि रक्षकः ।
ममोर्द्धमुखतो जातं मन्यसे चान्य आगमः ॥
एवं तवाचारनिष्ठा यास्यन्ति परमां गतिम् ।
वटुस्त्वं वत्स नो सौख्यं खानपानाङ्गनाभवम् ॥
इति श्रुत्वा ब्रह्मवचो धर्म्मसंस्थापनाय तु ।
युगत्रयं तदा जातं क्रोधसंरक्तलोचनम् ॥
अवज्ञां वीक्ष्य धातुश्च प्रखरेण नखेन च ।
शिरो निपातितं धातुः कराङ्गुल्या धरातले ॥
तन्मुखात् पञ्चमो वेदो मम देहे लयं गतः ।
तस्मादागमकर्त्ताहं वेदकर्त्ता पितामहः ॥
पञ्चाशदे महापद्मो ह्यागमयस्य ईरितः ।
तत्र मन्त्रा महादेवि सर्व्वेपि सुप्रतिष्ठिता ॥
त्रिंशन्निखर्व्वंपद्मञ्च नन्दनवत्यर्व्वुदकोटयः ।
मन्त्राः प्रोक्ता महेशानि त्वागमे कुत्र किं स्थितम् ॥
तत् शृणु त्वं महेशानि यद्याहं तव वल्लभः ।
पञ्चाशच्च महापद्मं षड्विंशति भुवि स्थितम् ॥
चतुर्दश स्थितं स्वर्गो [र्गे ?] दश पातालगोचरम् ।
एवं क्रमेण देवेशि ह्यागमः कथितो मया ॥

A list of Tantra works is given in Fol. 2A:—

कुमारी-योगिनी-काली-वाराही-कुब्जिका परा ।
नारायणी मुण्डमाला चामुण्डा भुवनेश्वरी ॥
गौतमी समया सौचामणिर्विजयमालिनी ।
लीलावती गुह्यसिद्धिर्मालिनी परमेश्वरी ॥
प्रचण्डचण्डिका-शम्भू नित्या कात्यायनीति च ।
फेत्कारी भैरवी भूतसिद्धिः सिद्धेश्वरी तथा ॥
मेरुनीलमतङ्गाश्च शक्तिसंगमभैरवी ।
साङ्ख्यायनं किरणाख्यं गन्धर्व्वंभूतभैरवौ ॥
वीरार्द्दनं वीरभद्रं रुद्रकालानरो[लो ?]त्तरे ।
सिद्धसारस्वतं हाहारावो मन्थानभैरवः ॥
सिद्धेश्वरी विश्वसारस्तथा बौधायनं पुनः ।
माहेश्वर-महाहारौ कालाग्निश्च महान्त्यपि ॥
एतेषां सन्ततो ज्ञेयस्तन्त्रग्रन्थः पृथक् पृथक् ।
सिद्धनाथो महाकालो दक्षिणामूर्त्तिरेव च ॥
सुरेन्द्रब्रह्मगोरक्षा वैशम्पायनमेव च ।
नन्दिकेश्वरवायव्यौ वाराही शाम्भवीति च ॥
सनत्कुमारः श्रीकण्ठो ह्यगस्त्यतत्त्वसारकौ ।
वसिष्ठः पुनरेतेषां चान्ते स्यात् संहिताभिधा ॥
ब्रह्मविष्णुरुद्रसिद्धदेव्युमाचन्द्रशक्तयः ।
एतेषामन्ततो ज्ञेयं यामलं चाष्टसंख्यकम् ॥

*Colophons and sectional headings:—*

2A, इत्यागमोत्पत्तिः ; 2B, अथ युगधर्माणाह ; 3B, अथ कौलिकवैदिककर्मविचारः ; 4B, अथ षोडश संस्काराः ; 5B, अथ जातकर्म्माख्यसंस्कारः ; अथ नामप्रदानाख्यसंस्कारः ; 6A, अथान्नप्राशनसंस्कारः ; अथ चौलाख्यसंस्कारः ; 6B, अथ मौञ्जीबन्धाख्यसंस्कारः ; अथ प्राजापत्यव्रताख्यसंस्कारः ; अथ सौम्यव्रतसंस्कारः ; अथ आग्नेयाख्यसंस्कारः ; 7A, अथ वैश्वदेवाख्यसंस्कारः ; अथ

गोदानाख्यसंस्कारः; 7B, अथ समावर्त्तनाख्यसंस्कारः; अथ विवाहाख्यसंस्कारः; अथ पितृमेधाख्यसंस्कारः; 8A, इति षोडश संस्काराः; अथ स्वप्ने लब्धमन्त्रोपासना-क्रममाह; अथ पूर्णाभिषेकप्रकारमाह; 9A, इति रुद्रयामलरामोत्तमार्गद्वयस्य पूर्णाभिषेकविधिप्रकारः; 9B, अथ महाविद्यायाः षडाम्नायप्रकारमाह; अथ श्रीविद्यायन्त्रधारणमाहात्म्यम्; 10A, [ वामिनामन्त्येष्टिक्रिया ]; इति श्रीमद्वडोपनामकजयरामभट्टसुतवाराणसीगर्भसम्भवकाशीनाथविरचित आगमो-त्पत्त्यादिवैदिकतान्त्रिकनिर्णयः समाप्तः।

## 6227.

### 6014. तन्त्रभूषा। *Tantrabhūṣā.*

Substance, country-made paper. 11¾×5 inches. Folia, 8. Lines, 10 on a page. Extent in ślokas, 200. Character, Nāgara. Appearance, fresh. Complete.

The work seeks to establish the authoritativeness of the Tantras. Of the works and authors referred to, mention may be made of—शङ्कराचार्यकृतसंग्रह (2A), भट्टोजिदीक्षित (4A) and प्रपञ्चसारविवरण (5B).

*Beginning:—*

श्रीगणेशाय नमः।

श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः।

वाराणसीमहं वन्दे सच्चिदानन्दरूपिणीम्।
मा[तृ]रूपेण सततं संसारेऽखिलेष्टदाम्॥
नत्वा श्रीदक्षिणामूर्त्तिचरणाम्भोरुहद्वयम्।
काशीनाथः प्रतनुते तन्त्रभूषां समासतः॥

तत्र ईश्वरः सर्व्वा अपि श्रुतीः भवपाशबद्धानां जन्तूनां स्वर्गाय मुक्तये च समुपदिशति स्म। अन्येषां स्मृतिशास्त्रादीनां तन्मूलकत्वेन च प्रामाण्यमिति सुप्रसिद्धतरम्। अस्यास्त्वागमस्मृतेः कथं तन्मूलक-

कुब्जिकातन्त्रे ।

देवदेव महादेव परमेश पुरातन ।
भावस्य श्रोतुमिच्छामि देवताया विशेषतः ॥
केन भावेन देवेश देवतास्तु प्रसीदति ।
भावस्य श्रोतुमिच्छामि कथ्यतां प्राणवल्लभ ॥

श्रीशिव उवाच ।

भद्रं भद्रं प्रवक्ष्यामि सावधानेन सुन्दरि ।
यं यं ज्ञात्वा विरिञ्चिश्च सृष्टिकर्त्ता न संशयः ॥
पालनं कुरुते विष्णुः रुद्रश्च नाशकः पुनः ।
जगद्वश्यश्च कुरुते यज्ज्ञात्वा साधकोत्तमः ॥
... ... ... ... ...
... ... ... ... ...
भावश्च त्रिविधो देवि दिव्यवीरपशुक्रमात् ।

भावचूड़ामणौ भैरव उवाच ।

समयाचारसंकेतं भावसंकेतमेव च ।
सूचितन्तु महादेवि कथयस्वानुकम्पया ॥
रहस्यानां हि मन्त्राणां यदि भावो न विद्यते ।
सिद्धिर्न जायते देवि सत्यं सत्यं हि शैलजे ॥

*End:—*

यथेक्षुगुड़माधुर्य्यं न परैर्ज्ञायते विभो ।
तथा भावविभावस्य मनसा परिभाव्यते ॥
एक एव महाभावो नानात्वं जायते विभो ।
उपाधिभेदभावेन भावभेदो न दृश्यते ॥

*Colophon:—*

इति भावनिरूपणम् ।

## 6275.

### 9926. महाविद्यानुमानम्। *Mahāvidyānumāna.*

Substance, country-made paper. 12¾ × 5¼ inches. Folium, 1. Lines, 23 in all. Extent in ślokas, 30. Character, Nāgara. Appearance, tolerable. Complete.

It contains a polemic discussion about the logical interpretation of the term Mahāvidyā.

*Beginning:—*

ॐ श्रीगणाधिपतये नमः। ॐ श्रीविद्याप्रदातृभ्यो नमः। स्वप्रकाशत्वसाधकमहाविद्यानुमानं स्पष्टीक्रियते यथामति। महती विद्या महाविद्या तदुपयोग्यनुमानमपि तथा। विद्याया महत्त्वञ्च दाराल्पत्वरूपलाघवशालित्वे सति सिसाधयिषितार्थसाधकत्वम्। तत्प्रयोजकः साध्यपदगतः श्लेषः। तत्र दृष्टान्तगता साध्याक्षर-समत्वरूपा प्रसिद्धिर्द्वारभूता पक्षगता तु फलमिति विवेकः।

## 6276.

### 3173. ब्रह्मनिरूपणम्। *Brahmanirūpaṇa.*

Substance, country-made paper. 15 × 5 inches. Folia, 16. Lines, 12 on a page. Extent in ślokas, 650. Character, Bengali. Appearance, discoloured. Complete.

*Beginning:—*

येन रूपेण ब्रह्माण्डा जायन्ते शृणु तत् प्रिये।
आकाशाज्जायते वायुर्वायोरुत्पद्यते रविः॥
रवेरुत्पद्यते तोयं तोयादुत्पद्यते मही।
पञ्चभूतैश्च ब्रह्माण्डा भवेयुः पर्व्वतात्मजाः॥
ब्रह्माण्डस्थापनार्थाय कूर्म्मपृष्ठे ह्यनन्तकः।
तन्मध्ये(?) वालुकाकारा ब्रह्माण्ड[ा] बहवः स्थिताः॥

कारणे (का)वारिमध्ये तु कूर्मश्चरति नित्यशः ।
अहमेव त्रिशूलेन पालयामि पुनः पुनः ॥

श्रीचण्डिकोवाच ।

किमाकारन्तु ब्रह्माण्डं तस्मे ब्रूहि महेश्वर(ः) ।
सृष्टिप्रकारं तन्मध्ये किमा[का]रं हि तत्त्ववित् ॥

श्रीशङ्कर उवाच ।

जम्बीराकारं ब्रह्माण्डं नानाविग्रहरूपकम् ।
ब्रह्माण्डं विग्रहं प्रोक्तं स्थूलसूक्ष्मादिकं हि यत् ॥
मेरुस्तन्मध्यके देवि तथा सप्त कुलाचलाः ।
मूलादिमस्तकान्तं वै सुमेरुर्नाम पर्व्वतः ॥
स्थिता मेरोरधोभागे ब्रकुट्या ऊर्द्ध्वदेशतः ।
भूर्लोकादि महेशानि सप्त स्वर्गाः क्रमेण हि ॥
ब्रकुट्यां सप्त पातालास्तिष्ठन्ति परमेश्वरि ।
सत्यलोके निराकारा महाज्योतिःस्वरूपिणी ॥
मायया च्छादितात्मानं चनकाकाररूपिणी ।
हस्तपादादिरहिता चन्द्रसूर्य्याग्निरूपिणी ॥
मया वन्दं नमतेश्च द्विधा भिन्ना जगन्मुखी ।
शिवशक्तिविभागेन जायते सृष्टिकल्पना ॥

इति ब्रह्मनिरूपणम् ।

शृणु देवि प्रवक्ष्यामि यथा सृष्टिः प्रजायते ।
सत्यलोके महाकाली महारुद्रेण संगता ॥
चनकाकृतिविस्तारा चन्द्रसूर्य्याग्निरूपिका(ः) ।
अनादिपुरुषसंयुक्ता तदंशा जीवसंज्ञकाः ॥
ज्वलदग्नेर्यथा देवि स्फुरन्ति विस्फुलिङ्गका[ः] ।
यस्यायुतं परं बिन्दुर्यथा भूमौ पतत्यपि ॥
तदेह सहसा देवि संज्ञायुक्तो भवत्यपि ।
शृणु देवि प्रवक्ष्यामि सृष्टब्रह्माण्डलक्षणम् ॥

मेरुपर्व्वतसन्मध्ये सर्व्वदेवाश्रयः शिवे ।
महाघोरा नदी तत्र मध्ये देशे व्यवस्थिता ॥
सुमेरोश्चोर्द्धदेशे तु सत्यलोकं वरानने ।
अधोभागे महेशानि प्रतिष्ठितं रसातलम् ॥
एवं क्रमे मेरुमध्ये भुवनानि चतुर्द्दश ।
पाताला सप्तकस्योर्द्धे ब्रह्मपद्मं महेश्वरि ॥
अधोवक्त्रं हि तत् पद्मं घोरा मध्ये चतुर्द्दलम् ।
पद्ममध्ये बीजकोषे क्षितिचक्रं मनोहरम् ॥
वलयाकाररूपेण समुद्राः सप्त संस्थिताः ।
जम्बुद्वीपं मध्यदेशे चतुष्कोणं मनोहरम् ॥
त्रिकोणं मदनागारं कन्दर्पश्चाधिदेवता ।
तन्मध्यं क्षितिबीजं गजेन्द्रवाहनं शिवे ॥
त्रिकोणे मदनागारे लिङ्गरूपो महेश्वर[ः] ।
मायाशक्तिर्महेशानि भुजगाकाररूपिणी ॥
तत्रैव वेष्टितं लिङ्गं सार्द्धत्रिवलयाकृति ।
लिङ्गच्छिद्रं स्ववक्त्रेण समाधिस्थ स्थिता सदा ॥
ऐन्द्रं बीजं वरारोहे लिङ्गस्य वामदेशके ।
सुसिद्धं ब्रह्मसदनं नादोपरि सुशोभनम् ॥
तत्रैव निवसेद्ब्रह्मा सृष्टिकर्त्ता प्रजापति[ः] ।
वामभागे च सावित्री वेदमाता सुरेश्वरी ॥
तस्याः प्रसादमात्रेण सृष्टिर्वितनुते सदा ।
तद्रूपं ब्रह्मसदनं लक्षयोजनविस्तृतम् ॥
तत् सर्व्वं परमेशानि ऋग्वेदाख्ये मयोदितम् ।
त्रिकोणे परमेशानि दिक्षस्थितमकोष्ठकाः ॥
तदेव परतराः प्रोक्ताः सर्व्वदेवाश्रयं हि तत् ।
त्रिकोणमध्ये तद्वाह्ये पश्चापूर्व्वं वरानने ॥
स्थावरं पर्व्वतं पक्ष कीटं पशुमनुत्तमम् ।
खर्गं लतादिकं तत्र नास्ति किं पृथिवीतले ॥

त्रिकोणवाह्ये गिरिजे पर्व्वतं वज्ररूपकम् ।
नीलाचलं मन्दरञ्च पर्व्वतं चन्द्रशेखरम् ॥
हिमालयं सुमेरुञ्च मलयं भस्मपर्व्वतम् ।
चतुष्कोणे वसेद्देवि एतत् सप्तकुलाचलम् ॥
एतेषां शिखराज्जातं पर्व्वतं वज्ररूपकम् ।
नानादेवालयं देवि तत्रैव दानवालयम् ॥
वृक्षगुल्मलतावल्लि नानारूपाणि तत्र वै ।
जायन्ते च म्रियन्ते च पूर्व्वोक्तेनैव वर्त्मना ॥
एतत्पद्मस्योर्द्धदेशे भौमाख्यपङ्कजं शुभम् ।
पत्रषट्कं तथाष्टत्रं चतुर्द्वारविभूषितम् ॥
पद्ममध्ये बीजकोषे सुवर्णोकं मनोहरम् ।
सिन्दूरसदृशं रक्तवर्णेन शोभितं सदा ॥
सिन्दूरारक्तवर्णेन निर्म्मितं चक्रपाणिना ।
तस्योर्द्धे निवसेद्विष्णुः श्रीवाणी वामदक्षिणे ॥
ब्रह्मणा सृज्यते लोकः पाल्यते चक्रपाणिना ।
वैकुण्ठं नाम तत् सर्व्वं (स्वर्गं) नानादेवालयं हि त[दु] ।
वैकुण्ठस्य दक्षभागे गोलकं सर्व्वमोहनम् ॥

*Colophons:*—

6B, इति श्रीचण्डिकाशङ्करसंवादे षट्चक्रनिर्व्वाणतन्त्रे सप्तलोककथनं नाम सम्पूर्णम्; 9A, इति कालीतन्त्रे गुप्तचतुर्दशपटलः; 16B, इति कालीतन्त्रे आचारविधिरष्टमः पटलः ।

Though indicated as *Brahmanirūpaṇa* or *Brahmanirṇaya* on the left margins of the leaves, the work contains extracts from different Tantras treating of cosmology, cakras, *nāḍīs* and the worship of Śakti.

## 6277.

### 3458. मन्त्रमुक्तावली । *Mantramuktāvalī.*

Substance, country-made paper. 15 × 3¼ inches. Folia, 58. Lines, 7 on a page. Extent in ślokas, 1,260. Character, Bengali. Appearance, discoloured. Incomplete.

The work begins on leaf 4B, the previous pages being taken up with the descriptions and illustrations of mystic diagrams called Ṛṇidhanicakra, Akathahacakra, Akaḍamacakra, Rāśicakra and the Nakṣatracakra.

This gives the *mantras*, *dhyānas*, *stavas* and *kavacas* of various deities. Though a compilation, interlocutions, presumably quoted from other works, between Śiva and Pārvatī occur occasionally. It does not agree with the works of the same name described in IO. IV. 2852 and CS. V. 62.

Of the works quoted, mention should be made of the following:—

8A—ज्ञानयामल, 10A—यामलसार, 13B—आनन्दलहरी, श्रीकल्पद्रुम, 45B—कावेरीतन्त्र ।

*Beginning*:—

ॐ नमो गोपालाय ।

अनाद्यायाखिलाद्याय मायिने गतमायिने ।
अरूपाय स्वरूपाय शिवाय गुरवे नमः ॥

श्रीपार्व्वत्युवाच ।

भगवन् सर्व्वधर्म्मज्ञ सर्व्वागमविशारद ।
मन्त्रमुक्तावलिं देव कथयस्व कृपामय ॥

ब्रह्माद्यैरपि यद् गोप्यं यद् गोप्यममरैरपि ।
कथयस्व समासेन सर्व्वतन्त्रक्रमेण च ॥

ईश्वर उवाच ।

शृणुष्वैकमना देवि पुरावृत्तक्रमेण च ।
सर्व्वतन्त्रं समालोच्य वक्ष्यामि हितकाम्यया ॥
शिवं भास्करं विष्णुञ्च गणेशादीन् क्रमेण च ।
सिद्धादिक्रमयोगेण वक्ष्यामि सारनिश्चयम् ॥
एकाक्षरे महामन्त्रे मालामन्त्रे तथैव च ।
स्वप्नलब्धे स्त्रिया दत्ते मित्रामित्रौ न शोधयेत् ॥

*Colophons of the different chapters:—*

7A, इति श्रीमन्त्रमुक्तावल्यां गणेशस्य प्रथमः पटलः ; 8B, ०श्रीसूर्य्यस्य मन्त्रध्यानन्यासकवचनिरूपणं द्वितीयः पटलः ; 10A, इति श्रीपार्व्वतीमहेश्वसंवादे शालवीपाख्याने मन्त्रमुक्तावल्यां तृतीयपटलः ; 12A, इति मन्त्रमुक्तावल्यां चतुर्थपटलः ; 13A, ० [मञ्जु]घोषस्य कवचराजकथने पञ्चमः पटलः ; 15A, ० श्रीविद्याश्रीबालाकथने षष्ठः पटलः ; 16B, ० सप्तमपटलः ; 17B, ०उत्तरयामले कामोदतन्त्रोक्तश्रीश्यागममहार्णवोक्त-श्यामसिद्धिसाधनं नामाष्टमः पटलः ; 19B, इति श्रीमन्त्रमुक्तावल्यां श्रीमन्महेश्वविरचितं रुद्रयामलोक्तभुवनेश्वरीकवचं नाम नवमपटलः ; 24A, ०रुद्रयामलोक्तं भुवनेश्वर्य्याः सहस्रनामस्तवं सम्पूर्णम् ; 25A, ० दशमपटलः ; 29A, इति मन्त्रमुक्तावल्यां मन्त्रपूजासङ्केतं नाम एकादशपटलः ; 33B, ० स्तवकवचविधानं नाम द्वादशपटलः ; 37A, ०योगेश्वरीमन्त्रपूजासंकेतं श्यामामन्त्रपूजासङ्केतं नाम त्रयोदशः पटलः ; 43A, इति श्रीमहाभैरवोपाख्याने मन्त्रमुक्तावल्यां छिन्नमस्ताकवचम् ; 45A ० चतुर्दशपटलः ; 47B, इति मन्त्रमुक्तावल्यां पञ्चदशपटलः ; 52B, ०षोडशपटलः समाप्तः ।

The 17th chapter which gives the 1,000 names of Chhinnamastā runs up to Fol. 57B but is not complete. After this Fol. there is another Fol., not numbered, containing three lines which belong to the 10th chapter, the colophon of which is also given there.

## 6278.

### 4706E. मन्त्रमाला । *Mantramālā.*

Substance, country-made paper. 13 × 4¾ inches. Folia, 25B–42A. Lines, 8 on a page. Extent in ślokas, 300. Character, Bengali. Appearance, old. Complete.

This contains a collection of *mantras* meant for particular deities and rites, generally in the order followed in the *Tantrasāra*. Descriptions of *Ṛṣi*, *nyāsa* and *dhyāna*, though promised, are not usually given. A number of *dhyānas*, however, are found on Fol. 42–43B of this MS. These belong to Bhuvaneśvarī, Annapūrṇā, Padmāvatī, Jayadurgā, Durgā and Lakṣmī.

*Beginning:—*

नमामि सद्गुरुं शान्तं प्रत्यक्षं कुलनायकम् ।
यस्य प्रसादमासाद्य तरन्ति भवसागरात् ॥
आदौ मन्त्राक्षरं पश्चादृषिप्रभृतिक्रमेण च ।
अष्टाविंशत् सङ्ख्याकं तथा पिङ्गलसम्मतम् ॥
ऋषिन्यासध्यानकानि पौरश्चारणिकं तथा ।
कथयिष्याम्यशेषेण परिभाव्य पुनः पुनः ॥

अथ भुवनेश्वरी । ह्रीं १।४।४।१२। लक्ष ॥ ऐं ह्रीं ऐं ३।४।८।१०। लक्ष ॥ केचित्तु २४ लक्ष ॥

*Colophon:—*

इति मन्त्रमाला समाप्ता ।

## 6279.

### 5733. मन्त्रपद्धतिः । *Mantrapaddhati.*

Substance, country-made paper. 14¾ × 6 inches. Folia (by counting), 24, marked 1 to 6, 18, 24, 27, 28, 29, 31, 36, 42, 49, 50, 57–62. There are two leaves without leaf-marks. Lines, 15, 16 on a page. Character, Nāgara. Appearance, old, worn out and discoloured. Fragmentary.

On a modern piece of paper, pasted on the obverse of the first Fol., the name of the work is given in a later hand as दशावतारादिमन्त्रपद्धति. The fragments preserved deal with *bhūtaśuddhi*, *nyāsa* of different types, *puraścaraṇa*, initiation and the worship of Vaiṣṇavite deities.

*Beginning:—*

+ + कमलपत्राक्षं वेणुवादनतत्परम् ।
देवकीनन्दनं + + कृष्णं गोपालरूपिणम् ॥
नमोऽस्तु + + + +
+ + + + +
अथ वक्ष्यामि मन्त्रस्य पद्धतिं नातिविस्तराम् ।
ऋजुं सिद्धिप्रदां पुंसां भुक्तिमुक्तिप्रदायिनीम् ॥

*Colophons:—*

3A, इति मन्त्रपद्धतौ भूतशुद्धिर्नाम प्रथमः कल्पः ; 29A, इति मन्त्रपद्धत्यां चाक्षादिपुरश्चरणकथनं नाम सप्तमः कल्पः ।

## 6280.

5918. **मन्त्रपारायणक्रमः ।** *Mantrapārāyaṇakrama.*

Substance, country-made paper. 9×4¼ inches. Folia, 16. Lines, 8 on a page. Extent in ślokas, 272. Character, Nāgara. Date, Saṃvat 1819. Appearance, old and discoloured. Complete.

This deals with the rules and procedure for *mantra-pārāyaṇa* or the muttering of *mantras*.

*Beginning:—*

अथ मन्त्रपारायणक्रमः । स तु श्रीधर्माचार्यैः स्वकीये लघुस्तवे मायाकुण्डलिनीत्यादिश्लोके सूचितः ।

यथा।

माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया भगवती देवी शिवा शाम्भवी।
शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसीति॥ १॥

माया ह्रीं, कुण्डलिनी ऐं, क्रिया क्लीं, मधुमती शुद्धा विन्दुयुता विसर्गयुता चेति चतुर्विधमातृकाः। काल्यादीनि दश नामानि शक्त्या द्वादशविद्या एभिः श्रीमूलविद्यायाः श्रीमदाराध्यचरणकृपा-प्राप्तो मन्त्रपारायणक्रमः प्रदर्श्यते।

तत्र कृतप्रातराह्निकक्रियो विविक्ते स्थाने स्वासनमास्तीर्य्य ह्रीं आधारशक्तिकमलासनाय नमः इति तत् संपूज्य तत्र प्राङ्मुख उपविश्य गुरुगणपति + + + प्रणम्य मूलविद्यया प्राणायामं कृत्वा संक्षेपतः कृत्वा संक्षेपतो भूतशुद्धिं कृत्वा गणपतिमातृकान्यासं मूलविद्याया ऋष्यादिकरषडङ्गन्यासं + + + देवताकरन्यासं च विधाय देवीं ध्यात्वा मानसैरुपचारैः श्रीपरदेवतात्मकपारायण-जपमारम्भे। तत्र तावत् मूलविद्या ह्रीं अ काली सौः। मूल ह्रीं आ काली सौः। मू॰ह्रीं इ काली सौः। मूल ह्रीं ई काली सौः। मू॰ह्रीं उ काली सौः।

*Colophon:—*

14B, इति मन्त्रपारायणक्रमः।

This colophon is followed by 28 verses which speak of *Antyayāga*:—

अथातो वक्ष्ये संक्षेपादन्त्ययागविधिक्रमम्।
साधकानां च सिद्धानां दीक्षितानां शिवागमे॥
दीक्षितास्त्रिविधाः प्रोक्ता उत्तमाधममध्यमाः।
तत्रोत्तमस्य नान्त्येष्टिः सर्व्वतीर्थात्मदर्शनात्॥

अथमस्यापि नान्येष्टिर्मौचिता पापयोजनात् ।
पारिशेष्यादथान्येष्टिः मध्यमस्येति नः स्थितिः ॥

This portion of the manuscript ends without any colophon, but with a date:—

संवत् १८२८ मौतो भादो सुदी ७ वार सनीचर ।

## 6281.

### 9309. गायत्रीमाला । *Gāyatrīmālā.*

Substance, country-made paper. 8¾ × 5 inches. Folia, 10. Lines, 10 on a page. Extent in ślokas, 130. Character, Nāgara. Appearance, old. Complete.

This MS contains the gāyatrīs of Brahman, Viṣṇu, Rudra, Mahālakṣmī, Nṛsiṃha, Lakṣmaṇa, Kṛṣṇa, Gopāla, Paraśurāma, Tulasī, Hanumān, Garuḍa, Agni, Pṛthvī, Jala, Ākāśa, Sūrya, Candra, Guru, Paramahaṃsa, Pavana, Haṃsa, Gaurī, Devī, numbering 24 in all.

*Colophon:*—

इति श्रीचौविस गायत्री सम्पूर्णा । शुभमस्तु ।

## 6282.

### 10250. बलिदानमन्त्रः । *Balidānamantra.*

Substance, country-made paper. 7 × 4½ inches. Folia, 2. Lines, 7 on a page. Character, Nāgara. Appearance, fresh. Complete.

This contains the *mantras* in connection with offerings to Vaṭuka, Kṣetrapāla, Yoginī and Gaṇapati.

## 6283.

### 9153. वीरभद्रतन्त्रोक्तप्रयोगः । *Vīrabhadratantroktaprayoga.*

Substance, country-made paper. 13 × 6 inches. Folia, 7. Lines, 13 on a page. Extent in ślokas, 175. Character, Nāgara. Appearance, old. Complete.

This MS contains a number of *mantras* the applications of which in magical rites are indicated in Hindi. The *mantras* appear to be taken from the *Vīrabhadratantra*, colophons of the first four chapters of which are found here (Fol. 3A, 4A, 5B, 6B).

*Beginning:—*

अथ शिवशिवासंवादे वीरभद्रतन्त्रोक्तप्रयोगः ।

## 6284.

### 7856. मन्त्रशुद्धिप्रकरणम् । *Mantraśuddhiprakaraṇa.*

Substance, country-made paper. $12\frac{1}{4} \times 4\frac{3}{4}$ inches. Folia, 10. Lines, 12 on a page. Character, Nāgara. Appearance, fresh. Incomplete.

It describes how *mantras* favourable for particular individuals are to be determined.

*Beginning:—*

अथ मन्त्रशुद्धिप्रकरणम् ।

मन्त्राणां तत्तचक्राविरुद्धत्वमेवेह शुद्धिः ।

निबन्धे ।

साधकानां शीघ्रसिद्धौ मन्त्रशुद्धिमथो ब्रुवे ।

स्वताराराशिकोष्ठानामनुकूलान् भजेन्मनून् ॥

... ... ... ... ...

... ... ... ... ...

बौद्धमन्त्रा जैनमन्त्रा येषु सिद्धादिशोधनं ।
एतद्भिन्नेषु मन्त्रेषु शुद्धिरावश्यकी मता ॥

## 6285.

### 10333. आम्नायः । *Āmnāya.*

Substance, country-made paper. 6¼ × 4 inches. Folia, 41. Lines, 7 on a page. Extent in ślokas, 260. Character, Nāgara. Appearance, discoloured. Complete.

This contains *mantras* for the worship of various deities.

*Beginning:—*

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान् द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥
पूर्वं दक्षिणपश्चिमोत्तरमनुं चोर्द्ध्वं ततोनुत्तरं
स्रोतद्वन्द्वपरागुरूंश्च चरणान् रत्नादिमिश्रान्तकान् ।
पञ्चाम्बा नवनाथषोडशषडाधारं च षड्दर्शनं
वाग्याद्यष्टकसप्तविंशतिरहस्यान्तान् न्यसेत् पूजयेत् ॥

*Colophons of the different chapters:—*

4A, इति पूर्व्वाम्नायः; 6B, इति दक्षिणाम्नायः; 10A, इति पश्चिमाम्नायः; 11B, इत्युत्तराम्नायः; 13A, इत्यूर्द्ध्वाम्नायः; 13B, इति दिव्यौघः; इति सिद्धौघः; 14A, इति मानवौघः, इत्यूर्द्ध्वौघः; इति दिव्यौघः; इति सिद्धौघः; 14B, इति मानवौघः; इति परौघः; 15A, इति दिव्यौघः, इति सिद्धौघः; 15B, इति मानवौघः; इति कामराजौघः; इति दिव्यौघः; इति सिद्धौघ; 16A, इति मानवौघः; इति लोपामुद्रौघः; 17A, इति कामराजविद्याचरणवासना; 17B, इति लोपामुद्राविद्याचरणवासना; 18A, इति स्रोतश्चरणवासना; 19B, इति शाम्भवचरणविद्याः; 20A, इति शाम्भवचरणवासना; 21A, इति परापादुकाक्रमः; 21B, इति लोपामुद्रापादुकाक्रमः; 22A, इति दिव्यौघः; 22B, इति

सिद्धौघः ; 23A, इति मानवौघः ; इति पारम्पर्य्यम् ; 25A, इति महापादुका ; 28B, इति सप्तविंशतिरहस्यानि ; 29A, इति पञ्चाम्बाः ; 29B, इति नवनाथाः ; 32B, इति षडाधारविद्याः ; 33A, षडध्वविद्याः ; 33B, इति षड्दर्शनविद्याः ; 34A, इति वाग्देवताष्टकम् ; 34B, इति षड्योगिनीविद्याः ; 37A, इति नित्यामन्त्राः ; 39A, इति पञ्चपञ्चिकाः ; 40B, चक्रे[श्व]रीविद्याः ; 41A, इत्यखिलमन्त्राः । इति श्रीआम्नायः समाप्तः ।

*Post-colophon Statement:—*

इदं पुस्तकं कोतपल्युपनामकचिन्तामणिमणिशर्म्मणेन लिखितं । श्रीगुरुचरणारविन्दार्पणमस्तु ॥ संवत् १८८६ पौष शुद्ध १४ शुक्रवासरे समाप्तः शुभं ॥

## 6286.

### 6550. *Āmnāya.*

Substance, country-made paper. 11¾×3¾ inches. Folia, 17. Lines, 7 on a page. Extent in ślokas, 300. Character, Nāgara. Appearance, fresh. Complete.

In the last colophon the work is called *Amnāyaprakāśa*, the word *prakāśa* being added in a later hand. This agrees closely (though not fully) with the work of the same name described above.

*Post-colophon Statement:—*

श्रीललिताम्बार्पणमस्तु । श्रीदक्षिणाचारमतप्रवर्त्तककाशीनाथभट्टभट्टेन लिखितमिदं । श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः । श्रीअन्नपूर्णायै नमः । श्रीकालभैरवाय नमः ।

## 6287.

### 10356. माहेश्वरी विद्या । *Māheśvarīvidyā.*

Substance, country-made paper. 9×5¼ inches. Folia, 4, marked 4, 5, 7, 8. Lines, 14–16 on a page. Extent in ślokas, 110. Character, Nāgara. Date, Samvat 1814. Appearance, discoloured. Incomplete.

This contains a number of magical *mantras*. Along with this is found one leaf of the *Nṛsiṃhasahasranāma* (*Stotraratnamālā*, Madras, 1927, Vol. I, pp. 418ff).

*Colophon*:—

इति श्रीश्वागमोक्तमहामाहेश्वरी महाविद्या चक्रेश्वरी ।

*Post-colophon Statement*:—

श्रीसंवत् १८२४ ॥ शाके शोला १६७९ ॥ एदं पुस्तकं लिषायत श्वामजी श्रीपू हरलालजी । लिषत्तं जोसी दयाराम ॥ वासतव्य पीपलादमध्ये ॥

## 6288.

### 11338. [निर्वाणमन्त्राः] । *Nirvāṇamantra.*

Substance, country-made paper. $8\frac{1}{2} \times 4\frac{1}{2}$ inches. Folia, 8. Lines, 7 on a page. Extent in ślokas, 75. Character, Nāgara. Appearance, fresh. Complete.

This gives the application of six *mantras* associated with the six *āmnāyas*.

*Beginning*:—

अस्य श्रीनिर्वाणमहासंवर्तानन्दनाथनिर्वाणमन्त्रस्य कालाग्निरुद्र ऋषिः वृहतीच्छन्दः श्रीनिर्वाणदक्षिणाकालिका देवता ह्सौं शक्ति र्ह्रौं कीलकं योगमोक्षसिद्ध्यर्थे विनियोगः ।

## 6289.

### 10189. मन्त्रसंग्रहः । *Mantrasaṃgraha.*

Substance, country-made paper. $12 \times 4\frac{1}{2}$ inches. Folia, 20, of which Fol. 3 is missing. Lines, 11 on a page. Extent in ślokas, 740. Character, Nāgara. Date, Saṃvat 1837. Appearance, discoloured and worn out. Complete.

It relates to the black rites of the Tantras and contains *mantras* in Hindi. After the fifth chapter there is a section on *dhārācakra.*

*Beginning:—*

महादेवं नमस्कृत्य गिरिजाङ्कविभूषितम् ।
सर्व्वकामप्रदातारं सावरोयं प्रलिख्यते ॥
... ... ...
भाषा संस्कृतयुक्तोयं मन्त्रौघो गोप्यश्च सर्व्वदा ।
तं सर्व्वं कथयिष्यामि प्रत्यक्षं भुवि कामदम् ॥
... ... ...
... ... ... ...

अथ बाबा आदममन्त्र । गुरुसत्य विस्मिदताहंकापसौमिमावन-कार॰ आदिमल-इष्टिकरतारवेदनहरम + हियकी आ जुग चारि वेद चतु पांच पखव छव मार साड समुद्र आठ वसु नव ग्रह दश एवनक्ष गारह रुद्र बारह राशि तेरह चमोल चोदहइ भुवन पंद्रह तिथि......।

*Colophons of the different chapters:—*

4B, इति श्रीशावरतन्त्रे मन्त्रसंग्रहे भानुमत्यादिदेवीचरिते प्रेताच्छान्नुप-[श्म]मनपर्य्यन्तः प्रथमः प्रका[शः] ।

8B, ॰भानुमतीसोनचिर-इयाकवुत्तरकलाप-उपदेशाच्छरीर[बाध्यु]पशमन द्वितीयः प्रकाशः ।

11B, ॰भानुमतीसोशाचरी-आकवुन्तरकालोपदेशावंधमोचपटोद्वाटनपसुर-रक्षागर्भमोचनबालकरक्षादिप्रयोगस्तृतीयः प्रकाशः ।

15B, ॰भानुमतिसोनाचर उआकवुन्तरकलापदेशस्थावरजंगमोपविशोप-शमनादिप्रयोग एव चतुर्थप्रकाशः ।

19A, ॰उर्व्वांमदविचित्रकलोपदेशान्मोहनमारणोचाटनोदेषादि पंच प्रकाशः।

*Post-colophon Statement:—*

शुभ सम्वत् १८३० समैनाम श्रावण सुदि द्वादशी वार शुक्रवार पूर्व्वाह्नवेलायां उल्लेखितं ।

## 6290.

### 10031. *Mantrasaṃgraha.*

Substance, country-made paper. 6¾ × 5 inches. Folia, 54. Lines, 8-9 on a page. Extent in ślokas, 700. Character, Nāgara. Appearance, fresh. Complete.

In the present as well as the following MS, the fourth and fifth chapters are referred to, presumably through inadvertence, as the third and fourth. The section on *dhārācakra* is attributed in these MSS to Gorakṣanātha.

This and the following two MSS have a different beginning which runs :—

अथ भूतावेशलक्षणम् । आदित्यहृदयात् ।

ब्रह्मा उवाच—

राक्षसेनाभिभूतस्य विकारं शृणु पाण्डव ।
गायते नृत्यते नग्न आस्फोटयति धावति ॥

## 6291.

### 10544. *Mantrasaṃgraha.*

Substance, country-made paper. 11 × 5 inches. Folia, 27. Lines, 9-11 on a page. Extent in ślokas, 650. Character, Nāgara. Appearance, discoloured. Complete.

The concluding portion of the second chapter along with its colophon is absent in the present MS.

## 6292.

### 10436. *Mantrasaṃgraha.*

Substance, country-made paper. 10¾ × 4½ inches. Folia, 8. Lines, 8, 9 on a page. Extent in ślokas, 144. Character, Nāgara. Appearance, fresh, though worn out. Incomplete.

The present MS contains only the first chapter of the work.

## 6293.

### 1172B. वर्णकोषः । *Varṇakoṣa.*

Substance, country-made paper. 10 × 4 inches. Folia, 10B–16. Lines, 7 on a page. Extent in ślokas, 85. Character, Nāgara. Appearance, old. Incomplete.

The work is called *Varṇakoṣa* in the first stanza and referred to by the same name in one of the introductory lines while the other, apparently through inadvertence, calls it *Bījakoṣa*. The work gives a list of words used in the Tantras to indicate the different letters of the alphabet. The present MS runs up to the letter ল.

*Beginning:—*

अथ वर्णकोष उच्यते । श्रीगणेशाय नमः । अथ वीजकोषः ।
नत्वा भगवतीं दुर्गां श्रीविनायकसंहितां ।
तन्त्रोद्धारसुबोधाय वर्णकोषः प्रतन्यते ॥
अकारः केशवो विष्णुः श्रीकण्ठः कीर्त्तिरेव च ।
पर्य्योदरौ महात्राह्मौ स्वरादिर्व्रीच्छगो मृगः ॥

## 6294.

### 180. मातृकाकोषः । *Mātṛkākoṣa.*

Substance, machine-made paper. 17 × 5 inches. Folia, 3. Lines, 10 on a page. Extent in ślokas, 70. Character, Bengali. Date, 1727 Ś.E. Appearance, tolerable. Complete.

The present MS has been described in L. I. 425. The work is of the same nature as the one described above.

*Beginning:—*

उद्यत्प्रद्योतनप्रख्यमतर्क्यगुणवैभवम् ।
लम्बोदरमास्यमम्बाया ग्राङ्कस्थं नौमि भूतये ॥
श्रीमच्चतुर्भुजाचार्य्यचरणाम्बुजद्वयम् ।
नत्वा संक्षेपतो वक्ष्ये मातृकाकोषमद्भुतम् ॥
ॐकारः प्रणवस्तारस्तारको ज्योतिरादिमः ।

*End:—*

संक्षेपात् मातृकावर्णनामान्येतान्यनुक्रमात् ।
साधूपकृतये सम्यक् प्रोक्तानि विदुषां मुदे ॥
अयन्तु मातृकाकोषः सर्व्वकोषोत्तमोत्तमः ।
धारणादस्य मन्त्राणां भवेदुद्धरणे क्षमः ॥

*Post-colophon Statement:—*

शकाब्दाः १७२७

## 6295.

## 9652. बीजवर्णसङ्केतः । *Bījavarṇasaṃketa.*

Substance, country-made paper. 10¾×5¼ inches. Folia, 2. Lines, 10 on a page. Extent in ślokas, 55 Character, Nāgara. Date, Saṃvat 1913. Appearance, old. Complete.

This work describes a number of *bījas* and contains a list of words used in the Tantras for the letters of the alphabet.

*Beginning:—*

ॐ श्रीगणेशाय नमः ।

तत्रादौ बीजवर्णानां सङ्केतः स्फुटमुच्यते ।
यज्ञं प्रवर्त्तयेत्तच तन्त्राद्यादि न पूर्व्वभाक् ॥ १ ॥
वर्णाद्यरं रश्मिवर्णाः स्वरास्तु कथितास्त्र च ।
व्यञ्जनानि हलो वर्णाः कादयोऽष्टौ प्रकीर्त्तिताः ॥ २ ॥

कादीनि पञ्च पञ्चैव चतुष्कं यादि शादि च ।
क्षादिद्वयञ्च मालायां स्वरैराद्योनमादिकः । ३ ।

*End*:—

अकुलो नकुलीशश्च हंसशून्यश्च शाकिनी ।
अनन्तो नकुलीबीजं परमात्मा ललाटजः ।
क्षश्च संवर्त्तको क्षान्तो वर्णान्तोन्तश्च कीर्त्तितः ॥

*Post-colophon Statement*:—

सं० १९१३ मार्ग सुदि ।

After the colophon there are a few lines about *mālāsaṁskāra*.

## 6296.

### 1172A. बीजकोषः । *Bījakoṣa.*

Substance, country-made paper. 10×4 inches. Folia, 3–10. Lines, 7 on a page. Extent in ślokas, 60. Character, Nāgara. Appearance, old. Complete.

The earlier portion of the MS appears to have contained another work of which the colophon is found in the beginning of the present MS:—

[मा]तृकावर्णनिर्घण्टः समाप्तः । मन्त्रमहोदध्यनुसारी ।

The present work which describes various *bījas* begins with the four stanzas occurring at the beginning of *Prakārāntaramantrābhidhāna* (Tantrik Texts, Vol. I, pp. 5ff). These are followed by the verses quoted below:—

अव्यक्तश्च त्रिमात्रश्च मूलज्योतिः शिवोऽव्ययः ।

प्रकाशं । ॐ ।

शिवचन्द्रशिवैः शक्रः स्वरोपेतैः सबिन्दुभिः ।
महाप्रेतमिति ख्यातं मन्त्रसिद्धिप्रदायकम् ॥

प्रकाशं + ॥

हृतीयदीनं तत्प्रोक्तं प्रेतबीजं सुखावहम् ।
हयग्रीवस्य बीजं तत् भुक्तिप्रसादमङ्गलम् ॥ हँसौ ॥

*End:*—

संवर्तो दक्षनेत्राढ्यो बिन्दुनादविभूषितः ।
गारुडं बीजमाख्यातं शिवं सर्वविषापहम् ॥ क्षौं ॥
हंसप्राणस्वरूपा प्राणवायुः स एव हि ॥ हंसः ॥

*Colophon:*—

इति बीजकोषः समाप्तः ।

## 6297.

### 9158. *Bījakoṣa.*

Substance, country-made paper. $11\frac{1}{2} \times 5\frac{1}{2}$ inches. Folia, 3. Lines, 14. Extent in ślokas, 80. Character, Nāgara. Date, Saṃvat 1815. Appearance, tolerable. Complete.

This work gives the names and forms of the various *bījas* used in the Tantras.

*Beginning:*—

श्रीगणेशाय नमः । अथ बीजकोषः ।

ॐ प्रणव तार ध्रुव तोमा त्र्यम्बक त्रासतारकवेदादि इति प्रणवनाम । श्रीं । लक्ष्मी पद्मा हरिणाक्षी सरोरुहकमला रुक्मणी इमे हरिप्रिया इति लक्ष्मीबीजनाम । ह्रीं पराभूति लज्जा माया सकला क्षमा सखा त्रामा देवी प्रणव इति लज्जाबीजनाम । क्लीं कामराज पञ्चेषु मदन मन्मथ मार प्रद्युम्न कन्दर्प इति कामराजबीजनाम । ऐं वाग्भवं ऊर्ध्वबीजं परमं वश्विकेश्वरं चन्द्रचर्मवसना चार्वङ्गी इति वाग्भवबीजनाम ।

*End:—*

छां छवि कान्ति शोभा सुषमा इति छविबीजनाम। वीं अभ्रं जीमूत अम्बुभृत् अवलं घन इति अभ्रबीजनाम।

वर्णानां देवदेवेशि कोशं प्रोक्तं मया शिवे।
नामामन्त्रमयुक्तं देवि सर्व्वागमविनिश्चितम्॥ १॥

*Colophon:—*

इति बीजकोश सम्पूर्णं॥

*Post-colophon Statement:—*

श्रीसं॰ १८२५ ज्येष्ठे कृष्णपक्षे त्रयोदश।

## 6298.

### 9101. *Bījakoṣa.*

Substance, country-made paper. 10 × 6 inches. Folia, 11. Lines, 5 on a page. Extent in ślokas, 55. Appearance, fresh. Character, Nāgara. Complete.

Unlike other works of the same name, the present work contains only a collection of names.

*Beginning:—*

प्रणव। १। वाग्भव। २। माया। ३। लक्ष्मी। ४। काम। ५। पाश। ६। कला। ७। गरुड़। ८। अङ्कुश। ९। काली। १०। सिद्धा। धर्म। जया। हयग्रीव। गौरी। माध्य। वधू। महाक्रोध।

## B. Works dealing with particular deities.

### I. Śakti.

### (1) Kālī.

**Pūrṇānanda.**

## 6299.

### 811. श्यामारहस्यम् । *Śyāmārahasya.*

Substance, country-made paper. 14¼ × 3 inches. Folia, 118. Lines, 6 on a page. Extent in ślokas, 2,700. Character, Bengali. Appearance, old and repaired. Incomplete.

The present MS runs up to the end of the 18th chapter. MSS of the work, complete in 22 chapters, have been described in IO. IV. 2597, L. II. 591. The work has been published in the *Vividhatantrasaṃgraha* and by Prabodh Chandra Pal and Brothers (Calcutta, Saṃvat 1948).

## 6300.

### 3880. *Śyāmārahasya.*

Substance, country-made paper. 15 × 4 inches. Folia, 159. Lines, 7, 8 on a page. Extent in ślokas, 3,560. Character, Bengali. Appearance, old and discoloured. Complete in 22 chapters.

## 6301.

### 4510. *Śyāmārahasya.*

Substance, country-made paper. 19 × 3 inches. Folia, 97. Lines, 6 on a page. Extent in ślokas, 2,700. Character, Bengali. Date, Śaka 1713. Appearance, fresh. Incomplete with 18 chapters.

*Post-colophon Statement* :—

श्रीअनन्तराम शर्म्मणः स्वाक्षरं पुस्तकञ्च ।

शकाब्दा १७१२ ।

## 6302.

### 9345. *Śyāmārahasya.*

Substance, country-made paper. 9½ × 4 inches. Folia, 35. Lines, 8 on a page. Extent in ślokas, 420. Character, Nāgara. Appearance, tolerable. Incomplete.

This MS contains the first two chapters and a portion of the third.

**Kāśīnātha Tarkālaṅkāra.**

## 6303.

### 3177. श्यामासपर्य्याविधिः । *Śyāmāsaparyāvidhi.*

Substance, machine-made paper. 12½ × 4½ inches. Folia, 47. Lines, 12 on a page. Character, Bengali. Appearance, fresh. Incomplete.

The work deals with the details of the worship of Kālī. A manuscript of the work, complete in seven chapters, is described in HPR. II. 224 where the date of composition is given as Śaka 1699. Another MS, complete in five chapters, but presumably containing the same material, is described in Mad. T. (VI. 5122). One more MS, complete in five chapters and written in the Nāgarī script, is in the old collection of the Society (I.E. 28). The present MS contains only a portion of the work. We have in the present MS only one colophon (of chapter I) on Fol. 23B. Another work of Kāśīnātha belonging to the old collection of the Society is the *Saparyāsāra*.

It is not known whether the *Tithitattvaṭīkā* (HPR. I. 150), *Prāyaścittakadambasāra* (HPR. I. 237) and *Prāyaścittatattvaṭīkā* (HPR. I. 238) are also by the same author. *Cat. Cat.* (I. 105) confuses him with Kāśīnātha, son of Jayarāma.

A list of Tantra works on which the present treatise is based is given as follows (Fol. 1):—

कालीतन्त्रं कौलतन्त्रं कामाख्यां कुब्जिकां तथा ।
कालिकोपनिषत्सारं कालीकल्पं कुलार्णवम् ॥
कुमारीतन्त्रकञ्चैव तस्याश्च कल्पमुत्तमम् ।
तारातन्त्रं योनितन्त्रं शक्तिसङ्गमतन्त्रकम् ॥
ज्ञानतन्त्रं तन्त्रराजं गुप्तसाधनतन्त्रकम् ।
पुरश्चर्यारसोल्लासं महाकालस्य संहिताम् ॥
रुद्रयामलतन्त्रञ्च तारासूक्तं तथोत्तरम् ।
तन्त्रं निरुत्तरञ्चैव मातृकाभेदमेव च ॥
वाणाविलासं विमर्शां वाख्याञ्चैव विलासकम् ।
वीरतन्त्रं विश्वसारं योगिनीं गुरुतन्त्रकम् ॥
संगोपनञ्च समयां स्वतन्त्रञ्च सरस्वतीम् ।
राधातन्त्रोत्तरातन्त्रमन्नदाकल्पमुत्तमम् ॥
उड्डीशोत्तरखण्डञ्च तथाचारस्य सारकम् ।
चिन्तामणिं भूतसिद्धिं तथाथर्वणः श्रुतिम् ॥
तोडलं नीलतन्त्रञ्च फेत्कारीं भैरवं तथा ।
एतानि मूलतन्त्राणि बहूनपि च संग्रहान् ॥
कालीतत्त्वं तत्त्वबोधं तत्त्वानन्दतरङ्गिणीं ।
ताराप्रदीपकं चैव त्रिपुरासारसंग्रहम् ॥
तारारहस्यवृत्तिञ्च ताराकल्पलतां तथा ।
तन्त्रसारं तन्त्रजीवं ताराभक्तिसुधार्णवम् ॥
श्यामाक्रमं शारदाञ्च श्यामानन्दतरङ्गिणीं ।
श्यामारहस्यं विमलं कालिकार्चाविधिं तथा ॥

ज्ञानार्णवञ्च विमलं कौलिकार्थनदीपिकां ।
कौलावलिं पञ्चचक्रपूजाक्रमलतां तथा ॥
मन्त्रदर्पणसंज्ञञ्च तथा मन्त्रमहोदधिं ।
इत्यादिकुलशास्त्राणि समालोच्य पुनः पुनः ।
साधकानां हितार्थाय ग्रन्थमेनं वदाम्यहम् ॥

Kāśinātha.

## 6304.

## 6528. कालीभक्तिरसायनम् । *Kālibhaktirasāyana.*

Substance, country-made paper. 11×5 inches. Folia, 29. Lines, 10 on a page. Extent in ślokas, 550. Character, Nāgara. Appearance, fresh. Complete in eight chapters.

*Beginning :—*

श्रीदक्षिणामूर्त्तिगुरुभ्यो नमः ।
महाकालीपदद्वन्द्वं निधाय हृदि सुन्दरम् ।
काशिनाथः(मत्तो)[प्रत]नुते कालीपूजारसायनम् ॥

तत्रादौ आचारनिर्णयः ।

श्यामारहस्यादिग्रन्थेषु ।

देवगृहं प्रविश्य आसनं सम्पूज्य स्वस्तिकाद्यासनेनोपविश्य पूर्व्वदिन-
पूजावशिष्टासवं पीत्वा पूजनं कर्त्तव्यमिति वदन्ति ।

तन्त्रवचनान्यत्र पठन्ति ।

भावचूडामणौ—

विना हेतुकमास्वाद्य क्षोभयुक्तो महेश्वरः ।
न पूजामासनं कुर्य्यान्न च ध्यानं न चिन्तनम् ॥
तस्माद्भक्त्या च पीत्वा च पूजयेत् परमेश्वरीमिति ... ...
... ... ... ... ...
... ... तथापि ब्राह्मणजातेरासवदानपानं

निषिद्धमेव। किन्तु शूद्रस्यैवासवदानपानयोरधिकारः। तथा च महाकालसंहितायां।

द्रव्येण सात्त्विकेनैव ब्राह्मणः पूजयेच्छिवामिति।

भैरवतन्त्रे।

क्षीरेण ब्राह्मणैस्तर्प्या घृतेन नृपवंशजैः।

सात्त्विकैर्वैश्यवर्गैस्तु आसवैः शूद्रजातिभिरिति॥

*Colophons of the different chapters :—*

3A, इति कालीभक्तिरसायने आचारनिर्णयाख्यः प्रथमः प्रकाशः; 4A, ॰द्वाविंशत्यक्षरीमन्त्रोद्धाराख्यो द्वितीयः प्रकाशः; 7A, ॰प्रातःकृत्यादितान्त्रिकसन्ध्याविधानान्तः तृतीयः प्रकाशः; 14A, ॰द्वारपूजनादिन्यासविधानाख्यचतुर्थप्रकाशः; 21B, ॰यन्त्रोद्धारादिप्रधानदेवतापूजनविधानाख्यः पञ्चमप्रकाशः; 26B, आवरणपूजाविधानाख्यः [षष्ठ]प्रकाशः; 28A, ॰विद्यामाहात्म्योपासकधर्मविधानाख्यः सप्तमः प्रकाशः; 29A, इति श्रीमद्गडोपनामकशिवराममट्टात्मजजयराममट्टसुमशिवभक्तसूनुतन्त्रशास्त्रप्रवीणदक्षिणाचारानुसारिकाशीनाथभट्टविरचिते कालीभक्तिरसायने पुरश्चरणविधानाख्योऽष्टमः प्रकाशः।

*Post-colophon Statement :—*

मालवीयबालमुकुन्दस्येदं पुस्तकम्।

*Authorities quoted and referred to :—*

1, श्यामारहस्य, भावचूडामणि, कुलार्णव, समयाचार; 2A, महाकालसंहिता, कुलचूडामणि, ज्ञानार्णव, लघुस्तव, वृहत्श्रीक्रमसंहिता, कालमाधवनिबन्ध; 2B, मेरुतन्त्र, रुद्रयामल, कुलार्णव; 3B, भैरवतन्त्र; 4B, कालिकाश्रुति; 5B, नीलतन्त्र, स्वतन्त्र, तन्त्रसार; 6A, शारदाटीका; 6B, चूडामणि, कौमारीतन्त्र; 7A–B, कुमारीकल्प, येत्कारिणीतन्त्र; 11A, दक्षिणामूर्त्तिसंहिता; 14A, सिद्धेश्वरीतन्त्र; 14B, कालिकाकुलसद्भाव, कुलसद्भाव, कालीक्रम; 20A, मेरुतन्त्र, मन्त्ररत्नावली, कालीकल्प; 21A, मत्स्यसूक्त; 22A, तन्त्रचूडामणि; 24B, विशुद्धेश्वरमहातन्त्र; 25A, हंसपारमेश्वर, कालीतन्त्र; 26B, तत्त्वसारसंहिता; 29A, मुण्डमाला; 29B, उत्तरतन्त्र।

**Rāmacandra Kavicandra Cakravartī.**

## 6305.

### 3459. श्यामाकल्पलता । *Śyāmākalpalatā.*

Substance, country-made paper. $15\frac{1}{4} \times 4$ inches. Folia, 124. Lines, 8 on a page. Extent in ślokas, 3,900. Character, Bengali. Date, Śaka 1722. Appearance, fresh. Complete in 11 stavakas.

*Last Colophon :—*

इति श्रीमाधवकविकण्ठाभरणचक्रवर्त्तिसुतरामचन्द्रकविचन्द्र-चक्रवर्त्तिविरचिता श्यामाकल्पलता समाप्ता ।

*Post-colophon Statement :—*

यदत्र भ्रान्त्या लिखितं विरुद्धं
विमर्षितव्यं खलु तत् सुधीरैः ।
यतो भवाब्धौ पतितस्य भ्रान्ति-
र्नं जायते कस्य पदे पदे वै ॥

शुभमस्तु शकाब्दाः १७२२ सौरभाद्रस्य चयोदशदिवसे सोमज-वासरे शुक्लपक्षीयाष्टम्यां समाप्तश्चायं ग्रन्थः ।

श्रीशिवप्रसाददेवशर्म्मणः स्वाक्षरमिदं पुस्तकञ्च ।
भवान्याः पदाब्जे मनो मे सदास्तु ।

The special features of the work and the works consulted in preparing it are thus indicated (Fol. 1A) in the beginning:—

यद्यपि पूर्णानन्दैः सर्व्वरहस्यं वर्णितं यत्नात्
तत्र स्वातन्त्र्येण प्रायो लोको बिभेति युगधर्म्मात् ।
अत इह सर्व्वजनानामविगीताचारमार्गेण
साधकसिद्धिफलेयं कल्पलता तन्यतेऽस्माभिः ॥
स्वतन्त्रं वीरतन्त्रञ्च फेत्कारीतन्त्रमेव च ।
कालिकाकुलसर्व्वस्वं कालीतन्त्रञ्च यामलम् ॥

कुलचूडामणिश्चापि कुमारीतन्त्रमेव च ।
कुलार्णवं तथा कालीकल्पं भैरवतन्त्रकम् ॥
कालिकाकुलसद्भावं तथा चीनतन्त्रकम् ।
वीक्ष्य तत्तत्प्रमाणेन वक्ष्ये मोक्षप्रदायिनीम् ॥
कलौ कल्पद्रुमप्रख्यां कालिकां भवभीतिहाम् ॥

MSS of the work have been described L. I. 267, HPR. I. 372.

**Rāghava Bhaṭṭa.**

## 6306.

### 5893. कालीतत्त्वम् । *Kālītattva.*

Substance, country-made paper. 10½ × 4½ inches. Folia, 6–39, with Folio Nos. 15, 16, 24, 26–30 missing. Lines, 13 on a page. Extent in ślokas, 845. Character, Nāgara. Appearance, old and discoloured. Incomplete.

A MS of the work, complete in 21 chapters, is described in Bik., p. 586. The present MS contains the colophons of chapters 3, 4 and 8 (Fol. 6A, 6B, 35B). The work is noticed under the name °*rahasya* in several catalogues (*Cat. Cat.* I. 99). For a note on the work cf. *Ind. Cult.* V. 211ff. The eighth chapter in the present MS comes to an end in the middle of the same chapter (Fol. 50B) of the following MS where the chapter ends on Fol. 62B.

## 6307.

### 11277. *Kālītattva.*

Substance, country-made paper. 11¼ × 3½ inches. Folia, 1–95, of which 78B is blank. Lines, 7. Extent in ślokas, 1,950. Character, Newari. Appearance, fresh. Incomplete.

The present MS contains the first 17 chapters of the work. After the first introductory verse quoted in Bik.

the present MS runs, giving an outline of the contents of the different chapters:—

विचार्य सर्वतन्त्राणि कुलनाथगणैः सह ।
साधकानाञ्च पश्चानं गुरूणाञ्च तथात्मनाम् ॥
उपनिषत् तथा स्तोत्रं निबन्धानपि भूयशः ।
श्रीमत्राघवभट्टेन कालीतत्त्वं वितन्यते ॥
प्रातःकृत्यं भवेदादौ स्नानं द्वितीयकं मतम् ।
सन्ध्या तृतीये तत्त्वे वै तुरीये तर्पणं तथा ॥
पूजा च पञ्चमे ज्ञेया शुद्धिर्द्रव्यस्य षष्ठके ।
सप्तमे कुलसम्पत्तिः पुरश्चर्याष्टमे तथा ॥
निमित्तं नवमे ज्ञेयं देवताप्रीतिकारकम् ।
दशमे काम्यकर्माणि आचारो दशमान्तिके ॥
द्वादशे स्नानपुष्पादि त्रयोदशे विधिर्बलम् ।
चतुर्दशे प्रायश्चित्तं भावः पञ्चदशे तथा ॥
षोडशे तु कुमारीणां पूजाविधिरुदाहृतः ।
सप्तदशे तु मालोक्ताऽष्टादशे स्तवसंकथा ॥
ऊनविंशतिमे शान्तिर्विंशतिमे तु मन्त्रकाः ।
ततः परं रहस्यादिः स्यादिति कर्मपद्धतिः ॥

*Works and authors quoted and referred to* :—

2A, कुलचूडामणि ; 4B, श्रीक्रमसंहिता, आथर्वणतन्त्र ; 6A, शारदा-टीका ; 6B, कुमारीतन्त्र ; 7B, नीलतन्त्र ; 8A, स्वतन्त्रतन्त्र ; 8B, कुमारी-कल्प ; 9B, भावचूडामणि, विजयाकल्प ; 10B, कालीक्रम ; 11B, भैरवतन्त्र ; 16A, कुलार्णव ; 35A, उत्तरातन्त्र ; 35B, कुमारीतन्त्र ; 38B, मातङ्गीतन्त्र, समयाचार ; 44A, कुलसम्भव ; 47A, एकवीराकल्प ; 48B, कुलप्रकाश ; 49A, ज्ञानप्रकाश ; 50A, कालीकल्प, तन्त्रराज ; 50B, वीरतन्त्र ; 62A, मुण्डमाला ; 62B, मत्स्यसूक्त ; 64A, मन्त्रचूडामणि ; 71A, लिङ्गागम ; 76A, फेत्कारिणी ; 77A, मुण्डमाला ; 83A, ब्रह्मयामल ; सर्वतन्त्र 95A, हंसपारमेश्वर ।

Ādyānandana (Navamisiṃha).

## 6308.

### 5473. कुलमुक्तिकल्लोलिनी । *Kulamuktikallolinī.*

Substance, country-made paper. 16×6 inches. Folia, 226. Lines, 12 on a page. Extent in ślokas, 9,450. Character, Nāgara. Date, Saṃvat 1877. Appearance, discoloured. Complete in 22 chapters.

The work deals with the details of the Tantra form of worship in general, with special reference to the worship of Kālī. A MS of it is described in L. VII. 2342. Another MS, also copied in 1877 V.S., is found in the Indian Museum collection (2689). Some of the works and authors referred to in the work are:—

सिद्धान्तशेखर, क्रियाकाण्डशेखर, सारसंग्रह, मन्त्रसारसंग्रह, रत्नावली, प्रयोगसार, क्रियासार, शारदा, मन्त्रमुक्तावली, लक्षणसंग्रह, त्रैलोक्यसार, रामवाजपेयी, आगमसिद्धान्त, त्रिपुरासारसमुच्चय, होमसागर, मन्त्रतन्त्रप्रकाश, सोमशम्भु, दीपिका, मायार्णव, महाकर्मार्चन, नित्याह्निकतिलक, रत्नसागर, कुलामृतदीपिका, विश्वक्षिरत्न, etc.

*Beginning* :—

श्रीगुरुगणेशाय नमः ।

नमामः सदानन्दरूपामनाद्या-
मगोत्राद्य गोत्रावतारां सुनन्दाम् ।
सुगोत्रोद्भवां भासमानां भवाब्धौ
ध्रुवां तारिणीं तारसर्गामनिन्द्याम् ॥

वन्दे श्रीगुरुपादुकां पशुपतिं गुह्येश्वरीं पीठगां
ब्रह्माविष्णुमहेशसेव्यपरगां श्रीकालिकां चिन्मयीम् ।
अज्ञानेन्धनदाहिनीं त्रिजगतां भक्त्यैकगम्यां पराम्
अष्टैश्वर्यनिदानदानदपदां भक्तैककल्पद्रुमाम् ॥

श्रीनेपालपतेरमात्यनवमौसिंहो गुरूणां मुखात्
ज्ञात्वा कौलिकवामदक्षिणमतं तन्त्रादिशैलोद्भवाम् ।
श्रीकालीकुलमुक्तिशब्दपरतः कल्लोलिनीं निर्मलां
दीक्षानित्यपुरश्चिक्रियादिलहरीं रम्यां तनोति स्वयम् ॥
आद्यानन्द इत्येव ख्यातनामा गुरोर्मुखात् ।
भक्त्युद्रेकादपर्णायां चञ्चलत्वं व्रजाम्यहम् ॥

*End* :—

यामीशो हरिरब्जयोनिरमरा राकापतिस्तच्छिरः-
स्थाम्यप्यम्बिरहःपतिर्न परमामाद्यन्तमध्यातिगाम् ।
या चानन्दमयी हृषीकगहना प्राविःक्षताधीन्द्रियैः
गुर्वाज्ञामनुगम्यमानहृदयैस्तस्यै भवत्यै नमः ॥
कल्लोलिनीकलितबोधसहस्रपत्र-
प्रोद्यन्मधुक्रमगकौलिकसद्द्विरेफाः ।
वर्णार्थिनः सरभसं प्रपिबन्तु नित्यं
गुर्वङ्घ्रिपद्मभजनाच्चदपीह लभ्यम् ॥

*Colophon* :—

इति श्रीआद्यानन्दविरचितायां कुलमुक्तिकल्लोलिन्यां द्वाविंशति-
तमः पटलः समाप्तः ।

*Post-colophon Statement* :—

श्रीरणोद्योतसाहो विरेजे जगत्यां
दरिद्रान्धकारे दिनेशो निशेशः ।
प्रतापे च शौर्ये च दानेऽमरद्रुः
गिरि श्रीगिरीशः क्षमासु क्षमा सुन्दरेषौ स्मरः ॥

... ... ... ...

... ... ... ...

तस्याज्ञासप्रमोदोऽस्तसुगतमनोऽलेलिखत् पुस्तकान्तत्
वर्षे श्रीवैक्रमेऽस्मिन् गिरिगिरिकरिभेशान्विते मार्गज्ञयौ ।

कात्तिकीये तिथौ भे अदितिसममिधे ब्रह्मयोगे च वारे
नाकस्थब्रह्मगामीश्वरगमनगुरोर्मन्त्रिणः सिद्धयोगे ॥
शुभमस्तु । कालो प्रसन्नोऽस्तु ।

*In a later hand :—*

शिवनारायणसुतो काशिपुरनिवासिना ।
मालवीयकुलोत्पन्न-बालमुकुन्दो हि नामतः ॥

At the end the MS contains a table of contents covering two leaves.

Cakravarti.

## 6309.

5958. **श्यामापूजापद्धतिः ।** *Śyāmāpūjāpaddhati.*

Substance, country-made paper. 11¼ × 5¼ inches. Folia, 15–45. Lines, 10. Extent in ślokas, 600. Character, Nāgara. Date, Saṃvat 1746. Appearance, good. Complete.

*Beginning :—*

कलानिधिकलोल्लासिमौलिस्मेरमुखाम्बुजाम् ।
कालिन्दीलोलकल्लोलकोमलां श्यामलां भजे ॥
यद्यपि पद्धतयोऽन्याः सन्ति च धन्याः कृता[ः] कृतिभिः
श्यामासौख्यसपर्य्यां तथापि कुर्व्वां मितैर्वचनैः ॥
प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितोऽर्च्चयेत् ।
तस्य पूजा च विफला प्रीयहीना यथा क्रिया ॥

अतो ब्राह्ममुहूर्त्ते चोत्थाय बद्धपद्मासनः शिरस्थधोमुखः सहस्र-दलकर्णिकामध्यवर्त्तौ चन्द्रमण्डलान्तर्गतहंसपीठे श्रीनाथं ध्यायेत् ।

*End :—*

मातः पूजितासि क्षमस्वेति संहारमुद्रया पुष्पमाघ्राय तद्वायु-[द्वा]रा शिवं [ते]जः प्रवहन्नासामार्गेण मूलाधारमानीय आत्मानं

कामकलाख्यं विभाव्य वाञ्छतो वैष्णवाचारपरायणो यथासुखं विहरेदिति ज्ञात्वा नन्दनूधरे गुरुपदाम्भोजैकसंसेवनं चेति ।

*Last Colophon* (Fol. 44A):—

इति श्रीचक्रवर्त्तिविरचिता साधकानां सुखबोधना[य] रत्नाकर-सर्व्वाम्नायपूजापद्धतिः समाप्ता ।

*Post-colophon Statement*:—

संवत् १७४६ । समये चैत्रशुक्लपञ्चम्यां बुधवासरे ।

The work deals with the details of the worship of Kālī and the morning rites of the worshipper. Another MS, copied in 1677 V.S., is found in the Indian Museum collection (No. 4590). The preliminary portion of the MS (Fol. 1–15A) is occupied by topics like the worship of Sumukhī (Mātaṅgī), Vagalāmukhī and Śrīvidyā. The beginnings and colophons of some of these topics are given below.

I. Sumukhīpaṭala.

*Beginning*:—

अथातः सम्प्रवक्ष्यामि देवि गुह्यमतं प्रिये ।
उच्छिष्टपूर्व्विकां देवीं मातङ्गीं सर्व्वसिद्धिदाम् ॥
सर्व्वपापहरां देवीं सर्व्वदोषविवर्ज्जित[ा]म् ।
यया विज्ञापनाद्देवि क्षयं गच्छन्ति चापदः ॥

*Colophon* (Fol. 4A):—

इति श्रीरुद्रयामले सुमुखीपटलं समाप्तम् ।

II. Rudrākṣamāhātmya.

*Beginning*:—

रुद्राक्षस्य फलं यच्च त्रिषु लोकेषु विश्रुतम् ।
सन्दर्शनाल्लक्षपुण्यं स्पर्शनात् कोटिरुच्यते ॥

*Colophon* (Fol. 6B):—

इति श्रीलिङ्गपुराणे शिवस्कन्दसंवादे रुद्राक्षमाहात्म्यं समाप्तम् ।

III. Taleśīstava.

*Beginning*:—

षडाधारपद्मान्तराले स्फुराले
सुषुम्नापथा ब्रह्मरन्ध्रे शिवेन ।
सहस्रारपद्मान्तेनोल्लसन्तीं
भजे श्रीभवानीं कुलेशीं तलेशीम् ॥

*Colophon* (Fol. 8B):—

इति श्रीचित्रविलासभट्टाचार्य्यविरचितं तलेशीभुजङ्गस्तवं सम्पूर्णम् ।

Fol. 8B–15A deal with Vagalāmukhī and Śrīvidyā.

Fol. 44B–45A contain an extract styled छायाकालज्ञान which begins:—

तस्य तत्र प्रवक्ष्यामि छायापुरुषलक्षणम् ।
येन विज्ञानमात्रेण त्रिकालज्ञो भवेन्नरः ॥
कालो वायुर्बलस्यापि येनोपायेन लक्ष्यते ।
तं वदामि समासेन यथा दृष्टः शिवागमे ॥

Along with the present MS is found another MS (Fol. 2–9), written in the same hand, dealing with Tantric topics like भूतशुद्धि and मातृकान्यास. Fol. 1 of this portion, which describes the अकडमचक्र, may have belonged to a work called श्यामापद्धतिरत्नाकर, a name found on the back of the Fol.

Anonymous.

## 6310.

## 6380. दक्षिणकालिकार्चनपद्धतिः । *Dakṣiṇakālikārcana-paddhati.*

Substance, country-made paper. 11 × 4½ inches. Folia, 48. Lines, 10. Extent in ślokas, 900. Character, Nāgara. Appearance, discoloured. Complete.

This deals with the daily rites of a worshipper of Kālī with special reference to the worship of that deity.

*Beginning:*—

श्रीगणेशाय नमः । श्रीगुरुमूर्त्तिर्जयति ।

नमः कर्पूरगौराय कैलासाचलवासिने ।
गौरीकण्ठग्रहानन्दनिष्यन्दायान्धकद्विषे ॥
उत्पत्तिस्थितिसंहारकारिकां जगतां पतिम् ।
देवतां कालिकां देवीं चिदानन्दस्वरूपिणीम् ॥
कालिकापूजनविधिं वक्ष्यामो[ह] सविस्तरात् ।
तत्र श्रीमान् साधकेन्द्रः प्रातःसन्ध्यापूर्व्वं दण्डद्वयात्मके ब्राह्ममुहूर्त्ते समुत्थाय ... ... ...

*End:*—

सुसाधकानां भुवि कल्पवृक्षः
प्रोक्तः सपर्य्याविधिरम्बिकायाः ।
विचार्य्य तन्त्राणि गुरुप्रसादे
त्रैलोक्यतत्त्वेन शिवोदितानि ॥

*Colophon:*—

श्रीदक्षिणकालिकार्चनपद्धतिः संपूर्णा ।

## 6311.

### 10054. पूजनप्रयोगसंग्रहः । *Pūjanaprayogasaṃgraha.*

Substance, country-made paper. 7¼ × 3¼ inches. Folia, 65. Lines, 6. Extent in ślokas, 390. Character, Nāgara. Date, Saṃvat 1743. Appearance, old and discoloured. Complete.

This work is of the same type as the one described under the previous number.

*Beginning* :—

श्रीगुरुचरणकमलेभ्यो नमः । श्रीदक्षिणायै नमः ॥

प्रणम्य दक्षिणापदारविन्दयुग्ममादरात् ।

करोति कोपि पूजनप्रयोगसंग्रहं बुधः ॥

तत्र साधकः प्रातरुत्थाय शय्यायामेव बद्धपद्मासनः कृताञ्जलिः प्रणम्य स्वशिरसि श्वेतसहस्रदलकमलकर्णिकामध्यवर्तिचन्द्रमण्डलान्तर्गतं स्वगुरुं ध्यायेत् ।

श्वेतं श्वेतविलेपमाल्यवसनं वामेन रक्तोत्पलं
बिभ्रत्या प्रिययेतरेण तरसा श्लिष्टं प्रसन्नाननम् ।
हस्ताभ्यामभयं वरञ्च दधतं प्रभ्रुस्वरूपं परम्
लालालोहितलोचनोत्पलयुगं ध्यायेच्छिरस्थं गुरुम् ॥

*End* :—

श्रीपात्रामृतं स्वपात्रे कृत्वा स्त्रीकृत्य भूमौ न्युब्जीकृत्य तदुपरि पुष्पं दत्त्वा पात्रं प्रक्षाल्य संशोध्य तदमृतबिन्दुभूमौ मायाबीजं विलिख्य वामहस्तकनिष्ठाङ्गुल्या तत्तिलकं कुर्यात् ।

यं यं स्पृशामि पादेन यं यं पश्यामि चक्षुषा ।
स एव दासतां यातु यदि शक्रसमो भवेत् ॥
इति कृत्वा नत्वा यथासुखं विहरेत् ।

*Colophon* :—

इति पूजाप्रयोगसंग्रहः समाप्तः ॥

*Post-colophon Statement*:—

शिवेन रचितं शिवम् ।

संवत् १७४३ चैत्रकृष्णद्वादश्यां भौमवासरे लिखितम् सदाशिवेन आत्मपठनार्थं । श्रीमन्महाकालरतां भजामि ।

## 6312.

### 10205. दक्षिणकालीविधिः । *Dakṣiṇakālīvidhi.*

Substance, country-made paper. 9 × 4 inches. Folia, 34, of which Fol. 2 is missing. Lines, 6. Extent in ślokas, 476. Character, Nāgara. Date, Saṃvat 1679. Appearance, old and discoloured. Complete.

A work of the same nature as the two described above; it contains authoritative extracts from different Tantras including a section on *vīrācāra* from the *Bhairavatantra* (Fol. 32A–34). It also deals in detail with different types of the rite called *puraścaraṇa* (Fol. 14Aff).

*Colophon* (Fol. 32A):—

इति दक्षिणकालीविधिः ।

*Post-colophon Statement*:—

संवत् १६७९ वर्षे चैत्रवदी १३ । राम राम ।

## 6313.

### 10. श्यामापूजापद्धतिः । *Śyāmāpūjāpaddhati.*

Substance, country-made paper. 9¼ × 3½ inches. Folia, 19. Lines, 6. Extent in ślokas, 250. Character, Nāgara. Appearance, old. Complete.

The present MS has been described in L. II. 726. This and the two following works describe the procedure of the worship of Kālī.

## 6314.

5259. कालिकापुजाप्रयोगः । *Kālikāpūjāprayoga.*

Substance, country-made paper. 17 × 4 inches. Folia, 9. Lines, 5. Character, Bengali. Appearance, discoloured. Incomplete at the end.

## 6315.

10768B. [दक्षिणकालिकापुजापद्धतिः] । *Dakṣiṇakālikā-pūjāpaddhati.*

Substance, palm-leaf. 16½ × 2 inches. Folia, 2–19. Lines, 3. Character, Bengali. Appearance, discoloured. Incomplete.

## 6316.

11301. गुह्यकाल्ययुताक्षरमालामन्त्रः । *Guhyakālya-yutākṣaramālāmantra.*

Substance, country-made paper. 8½ × 3¼ inches. Folia, 40. Lines, 6, 7. Appearance, fresh. Extent in ślokas, 380. Character, Newari. Appearance, fresh. Complete.

*Colophon:—*

इति महाकालसंहितोक्तमहाकालोपामि[त]बीजमालामयी नाम श्रीगुह्यकाल्ययुताक्षरमालामन्त्रः समाप्तः ।

## 6317.

11319. *Guhyakālyayutākṣaramālāmantra.*

Substance, country-made paper. 7½ × 3 inches. Folia, one large sheet of paper with 19 folds. Lines, 6. Extent in ślokas, 200. Character, Newari. Appearance, fresh. Complete.

This is also stated to belong to the *Mahākālasaṃhitā* though it does not fully agree with the *mantra* found in the foregoing MS.

## 6318.

### 11273. [गुह्यकालीपूजा । *Guhyakālīpūjā.*]

Substance, country-made paper. 7¼ × 3¼ inches. Folia, one long sheet of paper with 17 folds without any leaf-mark and with writing generally on one side of the paper. Lines, 7. Extent in ślokas, 90. Character, Newari. Appearance, old. Incomplete.

It deals with the details of the worship of Guhyakālī (e.g., कलशस्थापन, शङ्खस्थापन, अर्घ्यस्थापन, तर्पण, अमृतेश्वरीपूजन).

Along with this MS is found one page (8½″ × 3½″) in 7 lines of a work called *Gīrvāṇavāṅmañjarī* by one Ḍhuṇḍhirājakavi of Benares. It begins:—

नत्वा श्रीपतिपादपद्मममलं विश्वेश्वरं शारदां
तद्वत् श्रीगुरुपादपङ्कजयुगं ध्यात्वा ततः शारदाम् ।
काश्यास्थेन हि ढुण्ढिराजकविना गीर्वाणवाङ्मञ्जरी
बालानां सुखबोधनाय रचिता सा शोधनीया बुधैः ॥

## 6319.

### 5909. [पूजाविधिः । *Pūjāvidhi.*]

Substance, country-made paper. 8¾ × 4 inches. Folia, 9, of which Fol. 3 and 4 are missing. Lines, 9. Character, Nāgara. Appearance, discoloured. Incomplete.

The portion contained in the MS deals with rituals in connection with the worship of Kālī, specially in connection with the use of wine. The name of the work is given as *Tiraskariṇīvidhi* on the obverse of the first fol.

Along with this MS are found two folia numbered 2 and 3 which contain verses 4–6 of the *Pañcaratnamālikā* of Śaṅkarācārya with a vernacular commentary thereon by Sivarāmasvāmī.

*Beginning* :—

श्रीगुरुगणपत्यादिसर्व्वेष्टदेवताभ्यो नमः ।
श्रीदक्षिणाकालिकाम्बायै नमः ।

अथ गृहप्राङ्गणैकदेशे प्रत्यङ्मुख आजानुपादौ वा मणिबन्धौ वा प्रक्षाल्य आचम्य द्वारे स्थित्वा शुद्धोदकेन प्रणवेन द्वारं प्रोक्ष्य द्वां द्वारश्रियै नमः ।

(2) TĀRĀ.

**Śaṅkara.**

## 6320.

## 221. ताराहस्यवृत्तिका । *Tārārahasyavṛttikā.*

Substance, country-made yellow paper. Folia, 126. Lines, 6. Extent in ślokas, 2,500. Character, Bengali. Date, Śaka 1583. Appearance, old. Complete in 15 chapters.

The work deals with the details of the worship of Tārā. The present MS has been described in L. I. 512 where the work is wrongly stated to be a commentary on the *Tārārahasya*. Other MSS of the work are described in IO. IV. 2603, CS. V. 76 and VSP (p. 58). The real name of the author seems to be Śaṅkara Āgamācārya as given in the colophon of the India Office MS of the work. He is, however, generally represented as Śaṅkarācārya of Bengal (*Śaṅkarācārya of Bengal*—C. Chakravarti, *Pravāsī*, 1340 B.S., Vaiśākha, pp. 7–9).

*Colophon* :—

इति गौड़भूमिवासिमहामहोपाध्यायश्रीशङ्कराचार्य्यविरचिता ताराहस्यवृत्तिका समाप्ता ।

*Post-colophon Statement* :—

श्रीनन्ददुलालशर्म्मणः स्वाक्षरं पुस्तकम् ।
शके वह्न्यष्टतर्कचन्द्रे मधुमासस्य शुक्लदशम्यां समाप्तोऽयं ग्रन्थः ।

## 6321.

### 2790. *Tārārahasyavṛttikā.*

Substance, country-made paper. 18 × 3½ inches. Folia, 9. Lines, 6. Character, Bengali. Appearance, fresh. Incomplete.

The present MS contains a portion of chapter I covering the first 11 folia of the previous MS.

**Lakṣmaṇa Deśika.**

## 6322.

### 3373. ताराप्रदीपः । *Tārāpradīpa.*

Substance, country-made yellow paper. 15 × 3 inches. Folia, 70. Lines, 5. Extent in ślokas, 1,260. Character, Bengali. Date, Śaka 1673. Appearance, discoloured. Complete in five paṭalas.

MSS of the work are described in VSP. (p. 58), L. I. 236, 284, Bik. 618 and HPR. III. 128 in the last of which the author's name is given as Yādava Paṇḍita and the number of chapters is six instead of five. For a note on the work cf. *Ind. Cult.* V. 210ff.

The list of works consulted by the author is indicated thus (Fol. 2A) :—

स्वगुरोर्मतमालोच्य फेत्कार्य्यादिमतं तथा ।
कालीयबीजकातन्त्रं वीराख्यं सिद्धियामलम् ॥
मत्स्यसूक्तञ्च गान्धर्व्वं योगिनीयामतन्त्रकम् ।
उत्तराख्यं महातन्त्रं कालिकाख्यं पुराणकम् ॥
सिद्धभैरवतन्त्रञ्च नीलसारस्वतन्तथा ।
तथा च वह्निगीतन्त्रं तारार्णवमतं पुनः ॥
इत्यादिशास्त्रतत्त्वानि निबध्नामि यथोचितम् ।
साधकानां हितार्थाय सद्बुद्धिविभवाय च ॥

